# इति श्रीमद् गच्छाचारप्रकीर्णकं समाप्तम् ।

इतिश्रीविजयदानसूरिविजयमानराज्ये भव्यसुमनःसुमनस्सुपतीनां दुष्टदुःखाकुलदुर्जटस्थिरजिह्वव्याप्तनिर्दयदुर्वोधज्ञानान्धकुगुरुवचनोपदेशाग्निधूम्रश्याममुखोत्सूत्रवारुण्यपवित्रास्यकुमतिकुवासनावेलाभयङ्करकलहपङ्कबहुलकुराजगर्त्तादुश्चारकुसाधुमहाडम्भागाधमदमहत्तुङ्गपर्वतसङ्कीर्णशारीरमानसदुःखमयदुष्षमाकालकलिलसागरनिमज्जज्जन्तुपोतायमानानां श्रीतपगणमुनिनक्षत्रगणितानन्तानन्तकुमतिकुमतिकुवृष्ट्यार्द्रीकृतमुग्धध्यनन्ताशोपयत्तपस्तेजोजगदुद्द्योतयत्सुगुणसङ्कक्रमलोज्जृम्भयदज्ञानतमःकर्षयत्प्रत्यूषाण्डानां पावनीकृतात्मनां श्रीआनन्दविमलसूरीश्वराणां शिष्याणुशिष्येण वानराख्येन पण्डितश्रीहर्षकुलावाप्तगच्छाचाररहस्येन गच्छाचारप्रकीर्णकटीकेयं समर्थिता, आगमज्ञैः संशोध्येति, मम मूर्खशिरोमणेः कोऽपि दोषो न कर्पणीयः, अत्र मया यज्जिनाज्ञाविरुद्धं लिखितं व्याख्यातं च तन्मम त्रिविधंत्रिविधेन मिथ्यादुष्कृतं भवतु ॥

॥ इति श्रीगच्छाचारप्रकीर्णकटीका समाप्ता ॥

श्रीमदानन्दविमलाचार्यान्तिपत्श्रीमद्वानरर्षिगणिविहितवृत्तियुतं
गच्छाचारप्रकीर्णकं समासम् ।

गाहा, गिहि अण्णपासंडिया पवज्जाभिमुहं सावगं वा छज्जीवणियंति जाव सुत्तत्थो अत्थओ जाव पिंडेसणा, एस गिहत्थाइसु अववाओ"त्ति । तथा 'एयं'ति एनं गच्छाचारं पूर्वोक्तशब्दार्थं, किं विधाय ?–'अस्वाध्यायं' अपठनप्रस्तावं स्थानाङ्गोक्तं 'वर्जयित्वा' परित्यज्य, स्थानाङ्गोक्ता अस्वाध्याया यथा–"दसविहे अंतलिक्खिए असज्झाइए पण्णत्ते, तंजहा–उक्कावाए १ दिसिदाहे २ गज्जिए ३ विज्जुए ४ निग्घाए ५ जूवए ६ जक्खालित्तए ७ धूमिय ८ महिया ९ रयउग्घाए १०" इदं सूत्रम्, अस्य वृत्तिः–'अंत०' आकाशभवं 'अस०' अवाचनादि दिग्विभागे महानगरप्रदीपनकमिव य उद्द्योतो भूमावप्रतिष्ठितो गगनतलवर्त्ती स दिग्दाहः २, 'निर्घातः' साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्जितध्वनिः ५, सन्ध्याप्रभा चन्द्रप्रभा च यत्र युगपद् भवतस्तत् जूयगोत्ति भणितं, सन्ध्याप्रभाचन्द्रप्रभयोर्मिश्रत्वमिति भावः, तत्र चन्द्रप्रभावृता सन्ध्याऽपगच्छतीति । श्रुतस्य–महानिशीथकल्पादेः सिद्धान्तस्य निःस्यन्दं–सारभूतं विन्दुभूतं वा सुष्ठु–अतिशयेन उत्तमं 'सूत्तमं' प्रधानतमं तदुक्तक्रियाकरणेन मोक्षगमनहेतुत्वादिति ॥ १३६ ॥ किञ्च—

**गच्छायारं सुणित्ताणं, पढित्ता भिक्खु भिक्खुणी । कुणंतु जं जहाभणियं इच्छंता हियमप्पणो ॥ १३७ ॥**

गच्छा० ॥ एनं 'गच्छाचारं' सत्साधुगणमर्यादारूपं 'श्रुत्वा' सद्गुरुभ्योऽर्थमाकर्ण्य 'पठित्वा' मोक्षमार्गसाधकसाधुपार्श्वे योगोद्वहनविधिना सूत्रं गृहीत्वा 'साधवः' मुमुक्षवः 'भिक्षुण्यः' व्रतिन्यश्च 'कुर्वन्तु' निष्पादयन्तु यद् यथाऽत्र भणितं तत्तथेति 'इच्छन्तः' वाञ्छां कुर्वन्तः 'हितं' पथ्यं, कस्य ?, आत्मनः ॥ १३७ ॥ इति गच्छाचारप्रकीर्णकसूत्रम् ॥

...स्यादेतत् प्रत्येकवुद्धानां शिष्यभावो विरुध्यते, तदेतदसमीचीनं, यतः कपरिमाणेन प्रत्येकवुद्धपरिमाणप्रतिपादनात्, प्रव्राजकाचार्यमेवाधिकृत्य शिष्यभावो निषिध्यते न तु तीर्थकरोपदिष्टशासनप्रतिपन्नत्वेनापि ततो न कश्चिद्दोषः, तथा च तेषां ग्रन्थः—“इह तित्थे अपरिमाणा पइन्नगा पइण्णगसामिअपरिमाणत्तणओ, किंतु इह सुत्ते पत्तेयवुद्धपणीयं पइण्णगं भाणियव्वं, कम्हा ?, जम्हा पइण्णगपरिमाणेण चेव पत्तेयवुद्धपरिमाणं कीरइ, भणियं—‘पत्तेयवुद्धावि तत्तिया चेव’’त्ति, चोयग आह—णणु पत्तेयवुद्धा सिस्सभावो य विरुज्झए ?, आयरिओ आह—तित्थगरपणीयसासणपडिवन्न-त्तणओ तस्स सीसा हवंती’’ति। अन्ये पुनरेवमाहुः—सामान्येन प्रकीर्णकैस्तुल्यत्वात् प्रत्येकवुद्धानामत्राभिधानं नतु नियोगतः प्रत्येकबुद्धरचितान्येव प्रकीर्णकानीति, ‘सेत’मित्यादि, तदेतत्कालिकं, तदेतदावश्यकव्यतिरिक्तं, तदेतदनङ्ग-प्रविष्टमिति १३५ ॥

पढंतु साहुणो एयं, असज्झायं विवज्जिउं। उत्तमं सुयनिस्संदं, गच्छायारं सुउत्तमं ॥ १३६ ॥

पढंतु० ॥ ‘पठन्तु’ व्यक्तवाचा सूत्रतोऽर्थतश्च कण्ठगतं कुर्वन्तु ‘साधवः’ मोक्षसाधनतत्परमुनयः, उपलक्षणत्वात् साध्व्योऽपि, ननु यदुक्तं साधुसाध्व्य एव पठन्ति किं श्राद्धादयो न सिद्धान्तं पठन्ति ?, उच्यते, न पठन्त्येव, यदुक्तं श्रीनिशीथसूत्रस्यैकोनविंशतिकोद्देशकप्रान्ते“जे भिक्खू वा भिक्खुणी वा अण्णउत्थियं वा गारत्थियं वा वाएइ वाएंतं वा साइज्जइ’’ अस्य चूर्णिः—गिही अण्णतित्थिया वा ण वाएयव्वा, इत्थ दसमउद्देसाओ अत्थो जहा—अण्णउत्थियं वा गारत्थियं वा वायति अण्णतित्थिगा अण्णतित्थिणीओ अहवा गिहत्था गिहत्थीओत्ति, भवे कारणं वाएज्जावि, ‘पव्वज्जाए’

कालिकोत्कालिकभेदभिन्नानि सर्वसङ्ख्यया चतुरशीतिसहस्रसङ्ख्यान्यभवन्, कथम्? इति चेदुच्यते, इह यद् भगवदर्हदुपदिष्टश्रुतमनुसृत्य भगवन्तः श्रमणा विरचयन्ति तत्सर्वं प्रकीर्णकमुच्यते, अथवा श्रुतमनुसरन्तो यदात्मनो वचनकौशलेन धर्मदेशनादिषु ग्रन्थपद्धतिरूपतया भाषन्ते तदपि सर्वं प्रकीर्णकं, भगवतश्च ऋषभस्वामिन उत्कृष्टा श्रमणसम्पदासीत् चतुरशीतिसहस्रप्रमाणा ततो घटन्ते प्रकीर्णकान्यपि भगवतश्चतुरशीतिसहस्रसङ्ख्यानि १। एवं मध्यमतीर्थकृतामपि सङ्ख्येयानि प्रकीर्णकसहस्राणि भावनीयानि २। भगवतस्तु वर्द्धमानस्वामिनश्चतुर्दश श्रमणसहस्राणि तेन प्रकीर्णकान्यपि भगवतश्चतुर्दश सहस्राणि ३। अत्र द्वे मते–एके सूरयः प्रज्ञापयन्ति–इदं किल चतुरशीतिसहस्रादिकमृषभादीनां तीर्थकृतां श्रमणपरिमाणं प्रधानसूत्रविरचनसमर्थान् श्रमणानधिकृत्य वेदितव्यं, इतरथा पुनः सामान्यश्रमणाः प्रभूततरा अपि तस्मिन् २ ऋषभादिकाले आसीरन् १। अपरे पुनरेवं प्रज्ञापयन्ति–ऋषभादितीर्थकृतां जीवतामिदं चतुरशीतिसहस्रादिकं श्रमणपरिमाणं, प्रवाहतः पुनरेकैकस्मिन् तीर्थे भूयांसः श्रमणा वेदितव्याः, तत्र ये प्रधानसूत्रविरचनशक्तिसमन्विताः सुप्रसिद्धास्तद्गता अतत्कालिका अपि तीर्थे वर्त्तमानास्तेऽत्राधिकृता द्रष्टव्याः २। एतदेव मतान्तरमुपदर्शयन्नाह—'अहवे'त्यादि, अथवेति प्रकारान्तरोपदर्शने यस्य ऋषभादेस्तीर्थकृतो यावन्तः शिष्यास्तीर्थे औत्पत्तिक्या १ वैनयिक्या २ कर्मजया ३ परिणामिक्या ४ चतुर्विधया बुद्ध्या उपेताः–समन्विता आसीरन् तस्य ऋषभादेस्तावन्ति प्रकीर्णकसहस्राणि अभवन्, प्रत्येकबुद्धा अपि तावन्त एव २। अत्रैके व्याचक्षते–इह एकैकस्य तीर्थकृतस्तीर्थेऽपरिमाणानि प्रकीर्णकानि भवन्ति, प्रकीर्णककारिणामपरिमाणत्वात्, केवलमिह प्रत्येकबुद्धरचितान्येव प्रकीर्णकानि द्रष्टव्यानि, प्रकीर्ण-

महापच्चक्खाणं २९ एवमाइ, से तं उक्कालियं १। से किं तं कालियं?, २ अणेगविहं पन्नत्तं, तं०–उत्तरज्झयणाइं १ दसाउ २ कप्पो ३ ववहारो ४ निसीहं ५ महानिसीहं ६ इसिभासियाइं ७ जंबुद्दीवपण्णत्ती ८ दीवसागरपण्णत्ती ९ चंदपण्णत्ती १० खुड्डिआ विमाणपविभत्ती ११ महल्लिया विमाणपविभत्ती १२ अंगचूलिआ १३ वंगचूलिआ १४ विवाहचूलिआ १५ अरुणोववाए १६ वरुणोववाए १७ गरुलोववाए १८ धरणोववाए १९ वेसमणोववाए २० वेलंधरोववाए २१ देविंदोववाए २२ उट्ठाणसुए २३ समुट्ठाणसुए २४ नागपरिआवलिआ २५ निरयावलियाउ २६ कप्पिआओ २७ कप्पवडिंसियाओ २८ पुप्फिआओ २९ पुप्फचूलिआओ ३० वण्हीदसाओ ३१, एवमाइआइं चउरासीइं पइन्नगसहस्साइं भगवओ अरहओ उसहसामिस्स आइतित्थयरस्स १ तहा संखिज्जाइं पइन्नगसहस्साइं मज्झिमगाणं जिणवराणं २ चउद्दसपइण्णगसहस्साणि भगवओ वद्धमाणसामिस्स ३, अहवा जस्स जत्तिआ सीसा उप्पत्तिआए १ वेणइआए २ कम्मिआए ३ पारिणामिआए ४ चउव्विहाए बुद्धीए उववेआ तस्स तत्तिआइं पइण्णगसहस्साइं १ पत्तेअबुद्धावि तत्तिआ चेव से तं कालिअं, से तं आवस्सयवइरित्तं, से तं अणंगपविट्ठं" अत्र 'एवमाइयाइं' इत्याद्यंशस्य वृत्तिः 'एवमाइयाइ' इत्यादि, कियन्ति नाम नामग्राहमाख्यातुं शक्यन्ते प्रकीर्णकानि? तत एवमादीनि चतुरशीतिप्रकीर्णकसहस्राणि भगवतोऽर्हतः श्रीऋषभस्वामिनस्तीर्थकृतः १, तथा सङ्ख्येयानि प्रकीर्णकसहस्राणि मध्यमानामजितादीनां जिनवरेन्द्राणां, एतानि च यस्य यावन्ति तस्य तावन्ति प्रथमानुयोगतो वेदितव्यानि २, तथा चतुर्दश प्रकीर्णकसहस्राणि भगवतोऽर्हतो वर्द्धमानस्वामिनः ३, इयमत्र भावना–इह भगवत ऋषभस्वामिनश्चतुरशीतिसहस्रसङ्ख्याः श्रमणा आसीरन्, ततः प्रकीर्णकरूपाणि चाध्ययनानि

साधुः किं न करोति ?, उच्यते-प्रवाहेण स्तोककार्येऽपि रामाः शुनीवत्कलहं निष्पादयन्ति न तथा साधवोऽत आर्याः प्रोक्ता इति ॥ १३४ ॥ अथ कस्मादिदमुद्धरितमिति दर्शयति—

**महानिसीहकप्पाओ, ववहाराओ तहेव य । साहुसाहुणिअट्ठाए, गच्छायारं समुद्धियं ॥ १३५ ॥**

महा० ॥ श्रीमहानिशीथात्-प्रवचनपरमतत्त्वकल्पात् कल्पात्-बृहत्कल्पलक्षणात् 'व्यवहारात्' परमनिपुणात् तथैव च निशीथादिभ्यः 'साधुसाध्व्यर्थाय' साधुसाध्वीनां हितार्थायेत्यर्थः 'गच्छाचारं' गणाचारप्रतिपादकप्रकीर्णकं सिद्धान्तरूपं 'समुद्धृतं' उत्सर्गापवादनिरूपणेन बद्धमिति ॥ अत्र शिष्यः प्रश्नयति-प्रकीर्णकानामुत्पत्तिः किं गणधरात् गणधरशिष्यात् प्रत्येकबुद्धात् तीर्थकरमुनेर्वा ?, उच्यते-प्रत्येकबुद्धात्तीर्थकरविशिष्टमुनेर्वा, यदुक्तं नन्दिसूत्रे-"से किं तं अंगबाहिरं ?, २ दुविहं पण्णत्तं, तं०-आवस्सयं च १ आवस्सयवइरित्तं च २, से किं तं आवस्सयं ?, २ छव्विहं पन्नत्तं, तंजहा-सामाइअं १ चउव्वीसत्थओ २ वंदणयं ३ पडिकमणं ४ काउस्सग्गो ५ पच्चक्खाणं ६, से तं आवस्सयं । से किं तं आवस्सयवइरित्तं ?, आव० दुविहं प०, तं०-कालियं उक्कालियं च, से किं तं उक्कालियं ?, उ० अणेगविहं पं०, तं०-दसवेयालियं १ कप्पिआकप्पियं २ चुल्लकप्पसुयं ३ महाकप्पसुयं ४ उववाइयं ५ रायपसेणियं ६ जीवाभिगमो ७ पन्नवणा ८ महापण्णवणा ९ पमायप्पमायं १० नंदी ११ अणुओगदाराइं १२ देविंदत्थओ १३ तंदुलवेयालियं १४ चंदाविज्झयं १५ सूरपण्णत्ती १६ पोरिसिमंडलं १७ मंडलपवेसो १८ विज्जाचरणविणिच्छओ १९ गणिविज्जा २० झाणविभत्ती २१ मरणविभत्ती २२ आयविसोही २३ वीयरागसुयं २४ संलेहणासुयं २५ विहारकप्पो २६ चरणविही २७ आउरपच्चक्खाणं २८

अह तंपि नत्थि दोसजुत्तो वा तो अद्धजोयणेण लेवेणं गच्छउ मा य लेवोवरिणा २, एगजोयणेण थलपहेण गच्छउ मा य लेवेणं, अह नत्थि दोसजुत्तो वा तो अद्धजोयणेण संघट्टेण गच्छउ मा य लेवेणं ३, अद्धजोयणेण थलपहेणं गच्छउ मा य संघट्टेणं ४, एतेसिं परिहासेणं असतीए णावा १ लेवोवरि २ लेव ३ संघट्टेहिवि ४ गंतवं जयणाए" इति ॥ १३२॥



**तंमूलं संसारं जणेइ अज्जावि गोयमा! नूणं। तम्हा धम्मुवएसं मुत्तुं अन्नं न भासिज्जा ॥ १३३ ॥**

तंमूलं० ॥ तत्–पूर्वोक्तजिनाज्ञाखण्डनमूलं संसारं 'जनयति' अर्जयतीत्यर्थः 'आर्या' साध्वी अपिशब्दान्मुनिरपि हे गौतम! 'नूनं' निश्चितं 'तम्हा'इति यस्माज्जिनाज्ञाखण्डने विरुद्धप्ररूपणेऽनन्तभवभ्रमणं जायते तस्माद्धर्मोपदेशं स्वर्गापवर्गसौख्यप्रदं मुक्त्वा 'अन्यत्' आप्तवाक्यविसंवादि 'न भाषेत' न स्वपरसभायां प्ररूपयेदिति ॥ १३३ ॥

**मासे मासे उ जा अज्जा, एगसित्थेण पारए। कलहे गिहत्थभासाहिं, सवं तीइ निरत्थयं ॥ १३४ ॥**

मासे० ॥ 'मासे मासे उ'त्ति मासक्षपणं २ कृत्वेत्यर्थः, तुशब्दान्मासक्षपणद्वित्र्यादिकं कृत्वाऽऽऽपि याऽऽर्या 'एकसित्थुना' अद्वितीयेन कूरादिरूक्षरूपेण न तु सित्थुद्वयादिनेत्यर्थः 'पारयेत्' पारणकं करोतीत्यर्थः, एवंविधाऽपि साध्वी यदि 'कलहे'त्ति "द्वितीयातृतीययोः सप्तमी"ति द्वितीयार्थे सप्तमी 'कलहं' राटिं स्वपरवर्गसमक्षं करोति, काभिः?–गृहस्थानां–अनार्यरूपाणां भाषा–मर्मोद्धाटनालप्रदानशापप्रदानमकारचकारादिगालिप्रदानलक्षणास्ताभिर्गृहस्थभाषाभिः 'सर्वं' तपः–कष्टादिकं 'तीइ'त्ति 'तस्याः' नामसाध्व्याः कुरण्डतुल्यायाः 'निरर्थकं' सर्वथा निष्फलमित्यर्थः, ननु साध्वी कलहं करोति

दंसण० ॥ 'दर्शनातिचारं' सम्यक्त्वातिचारं करोति 'चारित्रनाशं' चरणविनाशं मिथ्यात्वं च 'जनयति' निष्पादयति द्वयोरपि 'वर्गयोः' साधुसाध्वीलक्षणयोः स्वपरे आर्या 'विहारभेदं' जिनोक्तमार्गविनाशं 'करेमाणी'ति कुर्वाणा, यद्वा विहारो–मासकल्पादिना विचरणं तस्य भेदो–मर्यादोल्लङ्घनं तं कुर्वाणा, एकत्र वसने साध्वीनां कारणं विना दर्शनचरणादिबहुविनाशहेतुत्वादिति । तथा च विहारं कुर्वतां यतीनां कदाचिन्नावा १ संघट्ट २ लेप ३ लेपोपरिकं ४ जलं भवेत तत्रेयं यतना, यथा–"दो जोयण वंकेणं थलेण परिहरइ बेडियामग्गं । सढजोयण घट्टेणं १, जोयण लेवेण २ उवरि दो
गाऊ ३ ॥१॥ सढजोयण वंकेणं थलेण लेवोवरिं च वज्जेइ । अधजोयण लेवेणं१संघट्टेणेगजोयणेणं च २ ॥२॥ एगजोयण २०
थलेणं, संघट्टेणद्धजोयणेण मुणी । लेवं वज्जइ य तहा घट्टं अधजोयण थलेण ॥ ३ ॥ एवं मग्गाभावे नावाईहिंपि कारणे मुणिणो । गच्छंतस्सवि दोसो न कोवि भणिओ जिणिंदेहिं ॥ ४ ॥ एएसि गाहाणं भावत्थो जहा– दोहिं जोयणेहिं गए थलपहेण गम्मइ मा य णावाए, जइ थलपहे सरीरोवघाई तेणा सीहा वा वाला वा भवंति थलपहे भिक्खं वा ण लब्भइ, वसही वा, तो दिवड्ढजोयणेणं संघट्टेण गम्मइ मा य णावाए, अह णत्थि संघट्टो सति वा परं दोसजुत्तो तो जोयणेण
लेवेण गच्छउ मा य णावाए, अह णत्थि लेवोवि सति वा पुव्वुत्तदोसजुत्तो तो अद्धजोयणेण लेवोवरिणा गच्छउ मा य २५
णावाए, अह तंपि णत्थि सति वा दोसजुयं तदा णावाए गच्छउ, एवं दुजोयणहाणीए णावाए पत्तो १ दिवड्ढजोयणेण ॥ ३९ ॥
थलपहेण गच्छउ मा य लेवोवरिणा, थलपहे असति दोसजुत्ते वा तो एगजोयणेण संघट्टेण गच्छउ मा य लेवोवरिणा, २८

'साधुना' मुख्यगुरुणा अन्येन मुनिना वा 'सार्द्धं' साकं प्रकर्षेण लोकसमक्षमसमक्षं वा यथा वाक्यं लपन्ति वदन्ति, किंभूताः ?–सु–अतिशयेन रुष्टाः–कोपचाण्डालत्वं प्राप्ताः 'सुरुष्टाः' अत्यन्तकोपगता इत्यर्थः अपिशब्दादल्परुष्टा अपि हे गौतम ! किं 'तेन' अधमरूपेण 'गच्छेन' मुण्डीवृन्देनेति ॥ १२९ ॥

जत्थ य गच्छे गोयम ! उप्पण्णे कारणंमि अज्जाओ । गणिणीपिट्ठिठियाओ भासंती मउअसद्देण ॥ १३० ॥

जत्थ य० ॥ यत्र च 'गच्छे' गणे हे गौतम ! 'उत्पन्ने' प्रादुर्भूते 'कारणे' ज्ञानदर्शनचरणानामन्यतरस्मिन् कार्ये 'आर्याः' लघुसाध्व्यः गणिनी–मुख्यसाध्वी तस्याः पृष्ठिस्थिताः–पश्चाद्भागे व्यवस्थिताः 'भापन्ते' जल्पन्ति, केन ?–'मृदुकशब्देन' अल्पर्जुनिर्विकारवाक्येन स्थविरगीतार्थादिसार्द्धमिति । 'पट्ठवियाउ'त्ति पाठे तु गणिन्या प्रस्थापिताः–प्रेपिताः सत्यो 'मृदुकशब्देन' विनयपूर्वकवचनकथनेन भापन्ते स गच्छ इति ॥ १३० ॥

माऊए दुहियाए सुण्हाए अहव भइणिमाईणं । जत्थ न अज्जा अक्खइ गुत्तिविभेयं तयं गच्छं ॥ १३१ ॥

माऊए० ॥ 'मातुः' जनन्याः 'दुहितुः' सुतायाः पुत्रस्य वाऽपत्यं, 'स्नुपायाः' वधूट्याः, अथवा भगिन्यादीनां 'यत्र' गणे न 'आर्या' भिक्षुणी 'आख्याति' कथयति 'गुप्तिविभेदं' नाम(मर्म)प्रकारं, कोऽर्थः ?–कारणं विना स्वपरवर्गे वदति ममेयं माता ममेयं दुहितेत्यादि, यदिवा अहमस्यास्या वा माता अहमस्यास्या वा दुहिता अहमस्य वधूटीत्यादि न जल्पति स गच्छ इति, यद्वा मात्रादीनां गुप्तेः–किमपि गोप्यस्य लोकावाच्यरूपस्य नाख्याति साध्वी स गच्छ इति ॥ १३१ ॥

दंसणइयार कुणई चरित्तनासं जणेइ मिच्छत्तं । दुण्हवि वग्गाणज्जा विहारभेयं करेमाणी ॥ १३२ ॥

संवि० ॥ 'संविग्ना' परमसंवेगरसलीना भीता–भयं प्राप्ता परिषत्–परिवारो यासां ताः भीतपरिषदः, यद्वा भीता–स्वरसङ्घाटिकया सह कलहादिकरणेन भयं गता परिषद् यासां तास्तथा, यद्वा भयमिहलोकभयं–स्वगुरुगुरुगुरूणां गण-कुलजात्यादीनामपकीर्त्तिलक्षणं परलोकभयं–महाव्रतदूषणलक्षणं परिषदि–परिवारे यासां तास्तथा, उग्रः तीव्रो दण्डः प्रायश्चित्तादिरूपो यासां ता उग्रदण्डाश्च 'कारणे' अकर्त्तव्ये कृत इति, 'स्वाध्यायध्यानसंयुक्ताः' तत्र स्वाध्यायः–पञ्चधा–वाचना १ प्रच्छना २ परावर्त्तना ३ ऽनुप्रेक्षा ४ धर्म्मकथा ५ रूपः, ध्यानं च धर्मशुक्ललक्षणं, यद्वा ध्यानं चतुर्धा पिण्डस्थादि, यदुक्तम्–"झाणं चउविहं होइ तत्थ पिंडत्थयं १ पयत्थं च २। रूवत्थं ३ रूवाइय ४ मेएसिमिमं तु वक्खाणं॥१॥ देहत्थं गयकम्मं चेदात्तं (जं दंतं) नाणिणं विऊ जत्थ। परम्मिस्सरियं अप्पं पिच्छइ तं होइ पिंडत्थं १॥२॥ मंतक्खराणि सारीरपउमपत्तेसु चिंतए जत्थ। जोगी गुरूवएसा पयत्थमिह वुच्चए तं तु। २॥ ३॥ जं पुण सपाडिहेरं ओसरणत्थं जिणं परमनाणिं। पडिमाइ समारोविय, झायइ तं होइ रूवत्थं ३ ॥ ४ ॥ जं परमाणंदमयं परमप्पाणं निरंजणं सिद्धं। झाएइ परमगुरुं रूवाईयं तमिह झाणं ४ ॥ ५ ॥" इति। तथा 'सङ्ग्रहे' शिष्यादिसङ्ग्रहणे चकारादुपग्रहे च–निर्दोषवस्त्रपात्रादिसङ्ग्रहणे 'विशारदाः' कुशलास्ता गणिन्य इति ॥ १२८ ॥

**जत्थुत्तरपडिउत्तरवडिआ अज्जा उ साहुणा सद्धिं। पलवंति सुरुट्ठावी गोयम! किं तेण गच्छेण? ॥ १२९ ॥**

जत्थु० ॥ 'यत्र' गणे उत्तरं प्रत्युत्तरं वा ददाति, तत्रोत्तरं–एकवारं प्रत्युत्तरं–पुनः पुनरिति, कलहेनाशुभरागेण वेति शेषः 'वडिआ'ति मुख्यभिक्षुणी वृद्धा वा–जराग्रस्ता वा 'आर्या' अनार्यारूपा, तथा च यत्र मुख्या अन्या वा मुण्ड्यः

॥ ३८ ॥

याभिस्ताः षट्कायमुक्तयोगाः संयत्यो धर्मकथामधर्मकथां वा तथा विकथां परस्परं विधवादिसार्द्धं वा स्त्र्यादिकथां कुर्वन्ति, तथा गृहस्थानां कार्यादौ प्रेषणं कुर्वन्ति 'गृहनिषद्यां वाहयन्ति' गृहस्थानामासनादिकमुपवेशनार्थं, मुञ्चन्तीत्यर्थः, यदिवा गृहिणां निषद्या-चक्कलकगद्दिकादिरूपा तां 'वाहिंती'ति व्यापारयन्तीत्यर्थः, संस्तवो द्विधा गुणसम्बन्धिसंस्तवभेदात्, एकैको द्विधा पूर्वपश्चाद्भावित्वात्, तत्र दानात्पूर्वं पश्चाद्वा गुणान् यत्र स्तौति स गुणसंस्तवः, सम्बन्धिसंस्तवस्तु जननीजनकभ्रातृभगिन्यादिपूर्वकालभावित्वात् पूर्वः, श्वश्रूश्वशुरकलत्रपुत्रादिपश्चात्कालभावित्वात्पश्चात्संस्तवः, आत्मपरतारुण्यादिलक्षणं वयो ज्ञात्वा तदनुरूपं यत् श्वेतपट्यः सम्बन्धं कुर्वन्ति स सम्बन्धिसंस्तवस्तं सस्तवं 'करंतीउ'त्ति कुर्वन्त्यस्ताः साध्व्यो न भवन्तीति ॥ १२६ ॥

समा सीसपडिच्छीणं, चोअणासु अणालसा । गणिणी गुणसंपन्ना, पसत्थपरिसाणुगा ॥ १२७ ॥

समा सी० ॥ 'समाः' तुल्या भवन्ति रागद्वेषपरिणामाभावात् 'सीस'त्ति स्वशिष्याः-स्वसङ्घाटिका इत्यर्थः प्रतीच्छिकाश्च स्वपरगच्छात् ज्ञानवैयावृत्त्याद्यर्थमागतास्तासां तासु वेति, 'चोयणासु'त्ति नोदनादिषु पूर्वोक्तशब्दार्थेषु 'अनालस्याः' सर्वथाऽऽलस्यरहिताः, गुणाः-ज्ञानदर्शनचारित्ररूपास्तैः संपन्नाः-समन्विताः, प्रशस्ता-क्षमाविनयवैयावृत्त्यादिगुणयुक्तत्वात् परिषत्- परिवाररूपा तयाऽनुगताः-सदासंयुक्ताः, एवंविधो गणः-साध्वीपरिवाररूपो विद्यते यासां ता गणिन्यो-मुख्यसाध्व्यो भवन्तीति ॥ ॥

संविग्गा भीयपरिस ादंडा य कारणे । सज्झायझाणजुत्ता य, संगहे अविसारया ॥ १२८ ॥

जलार्द्रीकृतवस्त्राणि 'ददति' घर्षयन्तीत्यर्थः, 'गृहकार्यचिन्तिकाः' अगारिगृहव्यापारकरणतत्पराः, नैव ता आर्याः हे गौतम !, किन्तु कर्म्मकर्य्य इत्यर्थः ॥ १२४ ॥

**खरघोडाइठ्ठाणे वयंति ते वावि तत्थ वच्चंति । वेसत्थी संसग्गी उवस्सयाओ समीवंमि ॥ १२५ ॥**

खरघो० ॥ खरघोटकादिस्थाने व्रजन्ति साध्व्यः, तत्र खरशब्देन दासप्रायः, यदुक्तमोघनिर्युक्तौ—"खरउ द्व्यक्षरो दासप्रायः द्व्यक्षरिका दासी"ति, घोटकशब्देन द्यूतकारादिधूर्त्ताः, यदुक्तं निशीथचूर्णौ—"घोडेहिं गाहा—घोडा वट्ठा जूयकरादिधुत्ता" इति, आदिशब्दादन्येऽपि तादृशा ग्राह्याः, तथा 'तेऽपि' खरघोटकादयः 'तत्र' आर्यास्थाने व्रजन्ति, अकालसकाले आगच्छन्तीत्यर्थः, वाशब्दात् परोक्षे ते ताभिः सह ता वा तैः सह दोहकगाथादिमुत्कलनेन परिचयं कुर्वन्तीति, तथा 'उपाश्रयसमीपे' साध्वीवसतिपार्श्वे वेश्या स्त्री तस्याः यद्वा वेश्यो ना तत्सदृशा याः स्त्रियस्तासां, यद्वा वेश्यायाः स्त्री दासीलक्षणा तस्याः, यद्वा वेश्या या स्त्री नटपुरुषमेलापकलक्षणा तस्याः, वेश्या स्त्री तत्पुत्रीलक्षणा तस्या वा, अथवा वेषस्त्री—योगिन्यादिवेषधारिका तस्याः, यदिवा वेषस्य—रजोहरणादिद्रव्यलिङ्गस्य अर्थः—उदरपूरणमुग्धवञ्चनादिप्रयोजनं वेषार्थः स च विद्यते यस्यासौ वेषार्थी, सर्वभ्रष्टाचारी साधुरित्यर्थः, आर्षत्वादीर्घः, तस्य संसर्गो भवति हे गौतम ! साऽऽर्या द्व्यक्षरिकोच्यते नत्वार्येति ॥ १२५ ॥

**छक्कायमुक्कजोगा धम्मकहा विगह पेसण गिहीणं । गिहिनिस्सिज्जं वाहिंति संथवं तह करंतीओ ॥ १२६ ॥**

छक्का० ॥ 'षट्कायमुक्तयोगाः' को भावः ?—षट्कायेषु—पृथिव्यादिषु मुक्तो—दूरीकृतो योगो—यत्नलक्षणो व्यापारो

श्रवणेन्द्रियं परमसन्तोषं प्राप्नोति । यद्वा 'गिण्हइ'त्ति गृह्णन्ति करचालनेन तथा वादयन्ति रागमण्डलं चाङ्गप्रमुखं यथा बालतरुणादीनां श्रवणेन्द्रियं तोषं यातीति, यद्वा रागमण्डलं श्रोत्रेन्द्रियेण गृह्णन्ति, तथा च गृहस्थबालकान् क्रीडार्थं गृह्णन्तीति । यत्रोत्तरार्धे पाठान्तरं यथा—"गिण्हइ रामणमंडणं भोयंति य तह य कव्वट्ठे"त्ति, अस्यार्थः—'कव्वट्ठे'त्ति गृहस्थबालकान् स्नेहाद् गृह्णन्ति तेषां 'रामणे'ति क्रीडां कारयन्ति 'मण्डनं' शरीरभूषणां कुर्वन्ति, तथा तान् भोजयन्तीति ता आर्याः केन कथ्यन्ते ?, न केनापीति ॥ १२२ ॥

जत्थ य थेरी तरुणी थेरी तरुणी अ अंतरे सुयइ । गोअम ! तं गच्छवरं वरनाणचरित्तआहारं ॥ १२३ ॥

जत्थ य० ॥ यत्र च गणे 'स्थविरा' वृद्धा तरुणी च—युवती साध्वी स्थविरा च तरुणी चकारान्मध्यमा तरुणी तरुणीमध्यमा च 'अन्तरे' अन्तराले स्वपिति, अन्यथा तरुणीनां निरन्तरशयने परस्परं जङ्घाकरस्तनपादादिस्पर्शने सति मन्मथचिन्ता पूर्वस्मरणादिकं भवति अतः स्थविरान्तरिताः स्वपन्ति हे गौतम ! तं गच्छवरं जानीहि, किंभूतं ?—वरज्ञानचारित्राधारमिति ॥ १२३ ॥

धोइंति कंठिआउ पोयंती तहय दिंति पोत्ताणि । गिहकज्जचिंतगीओ नहु अज्जा गोअमा ! ताओ ॥ १२४ ॥

धोइ० ॥ 'धावति' कारणं विना नीरेण क्षालयतीत्यर्थः 'कण्ठिकाः' गलप्रदेशान् तथा 'पोयंती'ति आभरणमुक्ताफलचीडकादीनि 'प्रोतयन्ति' रन्ध्रे सूत्रादिकं सञ्चारयन्तीत्यर्थः गृहस्थानामिति गम्यते, तथा 'ददति' अर्पयन्ति. 'पोत्ताणि' बालकार्थं वस्त्रखण्डानि, चकाराद् दुग्धौषधजटिकादिकमपि ददति, यद्वा शरीरे 'पोतानि' मलस्वेदादिस्फोटनाय

गतिविभ्रमादेव छोलनादेश्चवर्जनं गा. १२१–२

त्यर्थः, चशब्दाद्धस्ते मिन्धियका चरणेऽलक्तकुङ्कुमादि कण्ठे हारकादि इत्यादि कामाङ्गानि सेवन्ति, तथा रजोहरणे 'चित्ता'इति चित्राणि बाह्याभ्यन्तरपञ्चवर्णगुल्लादिकर्षणानि कुर्वन्तीति हे गौतम! ता अनार्या उच्यन्त इति ॥ १२० ॥

गइविब्भमाइएहिं आगारविगार तह पगासंति। जह वुड्ढाणवि मोहो समुईरइ किं तु तरुणाणं? ॥ १२१ ॥

गइ० ॥ याऽऽर्या 'गतिविभ्रमादिकैः' गमनविलासादिकैः आकारश्च–स्थूलधीगम्यदिगवलोकनमुखनयनादिचेष्टा विकारश्च–स्तनकक्षादिप्रदेशे हस्ताङ्गुल्यादिक्षेपणं आकारविकारं तं 'तथा प्रकाशयन्ति' तथा प्रकटीकुर्वन्ति यथा 'वृद्धा-
नामपि' स्थविराणामपि 'मोहः' वेदोदयः कामानुराग इत्यर्थः 'समुदीरइ'त्ति तत्क्षण एवोत्पद्यते, 'तुः' पुनरर्थे, किं पुनस्त- २०
रुणानां साधूनामिति, हे सौम्य! ताः साध्व्यो न, किन्तु नव्य इति ॥ १२१ ॥

बहुसो उच्छोलिंती मुहनयणे हत्थपायकक्खाओ। गिण्हेइ रागमंडल सोइंदिय तह य कव्वट्ठे ॥ १२२ ॥

बहु० ॥ 'बहुशः' कारणं विना वारंवारं 'उच्छोलिंती'ति क्षालयन्तीत्यर्थः 'मुखनयने' वक्राक्षिणी हस्तपादकक्षाश्च। तथा च याऽऽर्या 'गिण्हेइ'त्ति परेभ्यो रागज्ञेभ्यो 'गृह्णन्ति' शिक्षन्ते 'रागमण्डलं' श्रीराग १ गऊडी २ मल्हार ३ केदारउ ४-
मालवीगुढउ ५ सिन्धुउ ६ देशाख ७ आसाउरी ८ ( अधरस ७ काल्हेरउ ८ ) भूपाल ९ सामेरी १० मारुणी ११ २५
मेवाडउ १२ रामगिरी १३ केदारगउडी १४ मधुराग १५ प्रभाती १६ सबाब १७ वेलाउली १८ वसंत १९ नाट २० ॥ ३६ ॥
धन्यासी २१' इत्यादिकं रागसमूहं 'तहय'त्ति च पुनस्तद्रागमण्डलं गृहीत्वा 'तथा' तेन प्रकारेण करोति यथा 'कव्वट्ठे'त्ति
प्राकृतत्वाद्विभक्तिपरिणामः, तरुणपुरुषाणां, यद्वा 'कव्वट्ठे'त्ति समयभाषया बालकास्तेषामपि 'सोइंदिय'त्ति श्रोत्रेन्द्रियं २८

वेण्टलकादिवर्जनं अयतनावात्सल्यादि गा. ११९-२०

विंटालियाणि पउंजंति गिलाण सेहीण णेय तप्पंति । अणगाढे आगाढं करंति आगाढि अणगाढं ॥ ११९ ॥

'विण्टलिकानि' निमित्तादीनि, यद्वा 'वेण्टलिकानि' यन्त्रमन्त्रादीनि 'प्रयुञ्जन्ति प्ररूपयन्तीत्यर्थः 'ग्लानिकानां'
रोगिणीनां 'सेहीण'त्ति नवदीक्षितसाध्वीनां 'नेय तप्पंति'त्ति औषधभेषजवस्त्रपात्रज्ञानाभ्यासादिना चिन्तां न कुर्वन्ती-
त्यर्थः । तथा आगाढम्–अवश्यकर्त्तव्यं सर्पभक्षितविषमूर्छितमरणान्तशूलादिपीडितप्रतिजागरणादिकं न आगाढमनागाढं
तस्मिन् अनागाढे कार्ये 'आगाढं' अवश्यकर्त्तव्यमितिकृत्वा कुर्वन्तीत्यर्थः, तथा 'आगाढे' पूर्ववर्णितस्वरूपे कार्ये अना-
गाढं कार्यं कुर्वन्ति, गो०, यद्वा 'अणगाढे'त्ति आचाराङ्गादिअनागाढयोगानुष्ठाने 'आगाढं'ति भगवतीप्रमुखमागाढयो-
गानुष्ठानं कुर्वन्ति, तथा आगाढयोगानुष्ठानेऽनागाढयोगानुष्ठानं कुर्वन्ति च ॥ ११९ ॥ तथा—

अजयणाए पकुव्वंति, पाहुणगाण अवच्छला । चित्तलिआणि अ सेवंति, चित्ता रयहरणे तहा ॥ १२० ॥

अजय० ॥ 'अयतनया' जीवयतनां विनेत्यर्थः 'पकुव्वंति'त्ति प्रकर्षेण–मनोवाक्कायेन भिक्षाटनभोजनमण्डल्युद्धरण-
स्थण्डिलगमनग्रामानुग्रामपरिभ्रमणवसतिप्रमार्जनप्रतिलेखनाऽऽवश्यकादिकं कुर्वन्ति, यद्वा न विद्यते यतना–आचर-
णेनाथ षट्कायपरिपालना यत्र सा अयतना–केवलद्रव्यलिङ्गधारणा तया प्रकुर्वन्ति जठरपूरणार्थं रामाद्यावर्जनादिक-
मिति, तथा 'प्राघूर्णकानां' ग्रामान्तरागतानां मार्गश्रमसंयुक्तानां क्षुत्पिपासापीडितानां साध्वीनां 'अवच्छल'त्ति निर्दो-
षभव्यान्नपानादिना बहुमानपूर्वकं भक्तिं न कुर्वन्तीत्यर्थः, तथा 'चित्तलिआणि'त्ति चित्रितानि–नानाचित्रसंयुक्तानि
वस्त्रकम्बलीपात्रदण्डादीनि, यद्वा 'चीतलिकानि' चउकचीतलिकापाचीकासारपासकादीनि 'सेवन्ते' स्वयं प्रवर्त्तयन्ती-

रात्रिकथा-यावर्जनं कलहस्य च आलोचनं च गा. ११६-८

**बुड्ढाणं तरुणाणं रत्तिं अज्जा कहेइ जा धम्मं । सा गणिणी गुणसायर ! पडिणीया होइ गच्छस्स ॥ ११६ ॥**

बुड्ढा० ॥ 'वृद्धानां' जराजीर्णानां पुरुषाणां 'तरुणानां' मन्मथवयःप्राप्तानां उपलक्षणत्वान्मध्यमवयःप्राप्तानां 'रत्ति'ति रात्रौ निशायां याऽऽर्या कथयति धर्मं सा 'गणिनी' मुख्यसाध्वी हे गुणसागर ! प्रत्यनीका भवति गच्छस्य । यदि च गणिन्याः पुंसां रात्रौ धर्मकथने गणस्य प्रत्यनीकत्वं जायते तदाऽन्यसाध्वीनां का कथा ?, ननु विशेषतरं भवति प्रत्यनीकत्वमिति ॥ ११६ ॥

२० **जत्थ य समणीणमसंखडाइं गच्छंमि नेव जायंति । तं गच्छं गच्छवरं गिहत्थभासाउ नो जत्थ ॥ ११७ ॥**

जत्थ य० ॥ यत्र गणे चात् सङ्घाटकेऽपि 'श्रमणीनां' मोक्षमार्गप्रवृत्तसाध्वीनां 'असंस्कृतानि' परस्परं गृहस्थसार्द्धं वा स्वगणमुनिसार्द्धं स्वसङ्घाटकमुनिवर्गसार्द्धं वा कलहगालिप्रदानावर्णवादादीनि 'नैव जायन्ते' कदाऽपि नैवोत्पद्यन्ते तं 'गच्छं' गणं 'गच्छवरं' गणप्रधानं, तथा च यत्र गणे 'गृहस्थभाषाः' पूर्वोक्तसावद्यरूपाः, यद्वा मामा आई वाप भाई वाई वेटी" इत्यादिका नोच्यंते स गच्छो गच्छवर इति ॥ ११७ ॥

**जो जत्तो वा जाओ नालोयइ दिवसपक्खियं वावी । सच्छंदा समणीओ मयहरियाए न ठायंति ॥ ११८ ॥** २५

जो जत्तो० ॥ यो यावानिति 'जातः' उत्पन्नस्तं तथा 'नालोचयति' न गुरोः कथयति, तथा दैवसिकं पाक्षिकं वा, अपिशब्दाच्चातुर्मासिकं सांवत्सरिकं चातीचारं नालोचयति, तथा 'स्वच्छन्दाः' स्वेच्छाचारिण्यः श्रमण्यो 'महत्तरिकायाः' मुख्यसाध्व्याः आज्ञायां न तिष्ठन्ति स गच्छो मोक्षपदसाधको न, किन्तूदरपूरक एवेति ॥ ११८ ॥ २८

गृहकथावर्जनं गा. ११५

यथा—"इष्टानामर्थानां प्राप्तावभिमानगर्वसम्भूतः । स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः ॥ १ ॥ स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव । उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥ २ ॥" अन्ये त्वाहुः—"विलासो नेत्रजो ज्ञेयः" तथा शयनीयं—मञ्चकादिरूपं करोति, किंभूतं ?—डमरुकमणिन्यायेन सकारोऽत्रापि योज्यः 'सतूलीयं'ति गुप्तदवरकसहितं, पुनः किंभूतं ?—'सविब्बोकं' गल्लोपधानसहितं, उक्तञ्च कल्पे—"उभओ विब्बोयणे' उभयतः—शिरोऽन्तपादान्तावाश्रित्य 'विब्बोयणे'त्ति उपधाने गूण्डके यत्रेति, तथा 'उद्वर्त्तयति' पिष्टिकादिना मर्दयतीत्यर्थः 'शरीरं' स्ववपुः, स्नानादीनि आदिशब्दाद्विलेपनमङ्गे कण्ठे पुष्पमालादि हस्ते तालवृन्तादिकं धूपनं वस्त्रादेः दृशोरञ्जनं दन्तकाष्ठमित्यादिकं या करोति सा आर्या नोक्ता श्रीवर्द्धमानस्वामिना, किन्तु वेषविडम्बनी जिनाज्ञाकन्दलीकुठारिका प्रवचनमालिन्यकारिणी अनाचारिणी सम्यक्त्वतरुकरिणी प्रमादसरणिः मुनिमनोभङ्गकारिणी सत्साधुयोधवारुणीति ॥ ११४ ॥

गेहेसु गिहत्थाणं गंतूण कहा कहेइ काहीया । तरुणा अहिवडंते अणुजाणे साइ पडिणीया ॥ ११५ ॥

गेहे० ॥ गृहेषु गृहस्थानां गत्वा 'कथां' धर्माभासकथां संसारव्यापारविषयां वा 'कथयति' वचनविलासेन विस्तारयतीत्यर्थः, 'काहीया'त्ति 'कथिका' कथाकथिकाऽऽर्या । तथा या च तरुणादीन् पुरुषान् 'अहिवडंते'त्ति 'अभिमुखमागच्छतः' सन्मुखमागच्छमानान् 'अनुजानाति' आगम्यतां भवतामागमनं भव्यं भव्यमस्मदीयस्थानजातं स्थीयतां, गमनप्रस्तावे पुनरागमनं विधेयं, परत्वं न चिन्तनीयं, अस्मद्योग्यं कार्यं ज्ञाप्यमित्यादिकं वचनाडम्बरं करोतीत्यर्थः सा मुण्डी, इकारः पादपूरणे, प्रत्यनीकमिव—प्रतिसैन्यमिव या सा प्रत्यनीका गुरुगच्छसङ्घप्रवचनस्य प्रतिकूलविधानादिति ॥११५॥ किञ्च—

गणिगोअम ! जा उचियं, सेयं वत्थं विवज्जिउं । सेवए चित्तरूवाणि, न सा अज्जा वियाहिया ॥ ११२ ॥

गणिगो० ॥ हे गणिगौतम ! 'या' आर्या उचितं श्वेतं साध्वीयोग्यं 'वस्त्रं' वसनं 'विवर्ज्य' परित्यज्य सेवते 'चित्ररूपाणि' विविधभरतादियुक्तानि वस्त्राणि, यद्वा चित्राणि–आश्चर्यकराणि रूपाणि–गूल्लकूदद्विकाकमलादीनि येषां तानि चित्ररूपाणि बहुमूल्यवस्त्राणि साध्व्ययोग्यानि न सा 'आर्या' साध्वी 'व्याहृता' मया, न कथितेत्यर्थः, किन्तु सा जिनप्रवचनोड्डाहकारिणीति ॥ ११२ ॥

चित्ररूपस्य सीवनादेः सविलासगत्यादेश्च वर्जनं गा. ११२–४

सीयणं तुण्णणं भरणं, गिहत्थाणं तु जा करे । तिल्लउवट्टणं वावि, अप्पणो य परस्स य ॥ ११३ ॥ २०

सीव० ॥ याऽऽर्या सीवनं खण्डितवस्त्रादेः तुन्नन जीर्णवस्त्रादेः भरणं कञ्चुकटोपिकाकुञ्चिकादीनां भरतभरणं गृहस्थानां तुशब्दाद्गृहस्थगृहद्वारादिरक्षणानि करोति, तथा च या तैलेन उपलक्षणत्वात् घृतदुग्धतरिकादिना 'उद्वर्त्तनं' अङ्गोपाङ्गानां मर्दनं तैलोद्वर्त्तनं अपिशब्दादङ्गक्षालनविविधमण्डनादिकं करोति सुभद्राऽऽर्यादिवत् 'आत्मनश्च' स्वस्य 'परस्य च' गृहस्थबालकादेः सा "पासत्था पासत्थविहारणी उसन्ना उसन्नविहारणी कुसीला कुसीलविहारणी"त्यादिदोषान्विताऽवगन्तव्येति ॥ ११३ ॥ २५

गच्छइ सविलासगई सयणीअं तूलीअं सबिब्बोअं । उवट्टेइ सरीरं सिणाणमाईणि जा कुणइ ॥ ११४ ॥ ॥ ३४ ॥

गच्छइ० ॥ 'गच्छइ सविलासगई'त्ति अत्रापि बिब्बोकशब्दस्य परामर्शः, या आर्या बिब्बोकपूर्वकं यथा स्यात्तथा 'सविलासगतिर्गच्छति' विलाससमन्वितया गत्या राजमार्गादौ पण्याङ्गनावत् परिभ्रमतीत्यर्थः, बिब्बोकविलासयोर्लक्षणं २८

योगिनी भव, किं तव लग्नो यक्षः ?, त्वां याकिनी भक्षयति ?, तव जननी मृता तव जनको मृतः रे ? जोषं कुरु किं जन्मान्तरे यक्षणी भविष्यसि ?, मकारं यथा म्रियतां मरिष्यति तव गुरुणी मृतस्तव गुरुः मुखं मा दर्शय दुष्टं मुखं कृष्णं कुरु तव मुखे विष्ठा पतिष्यति चिन्तां मा कुरु मुखं लात्वा गच्छ इतः, इत्यादिवचनपूर्वकं 'श्रमणी' श्रीजिनप्रवचनदमनी 'जल्पति' वाढस्वरेण कुत्सितं वक्तीत्यर्थः 'गृहस्थप्रत्यक्षं' गृहस्थानां श्रवणं यथा स्यात्तथा प्रत्यक्षं—साक्षात् भवपरम्पराकोटिसङ्कुले 'संसारे' चतुर्गत्यात्मके 'आर्या' साध्व्याभासवेषा वेषविडम्बिका 'प्रक्षिपति' पातयतीत्यर्थः 'आत्मानं' स्वयमिति ॥ ११० ॥

जत्थ य गिहत्थभासाहिं भासए अज्जिआ सुरुट्ठावि । तं गच्छं गुणसायर ! समणगुणविवज्जियं जाण ॥१११॥

जत्थ० ॥ यत्र गणे च 'गृहस्थभाषाभिः' सावद्यरूपाभिर्भाषते, गृहस्थानां यथा—तव गृहं ज्वलतु तव पुत्रो यमगृहे गच्छतु त्वं तवाम्बाऽपि शाकिन्यौ स्तः, साध्वीनां यथा—तव शवं कर्षयामि तव दन्तपङ्क्तिं पातयामि तव चरणौ कर्त्तयामि तव जठरेऽग्निक्षेपं कुरु रे शाकिनि ! रे रण्डे ! इत्यादि भाषते, आर्यिका—अधमा मुण्डी सुरुष्टा—अतिशयेन क्रोधाग्निना ज्वलिता, अपिशब्दात् स्वभावस्थाऽपि गृहस्थभाषाभिर्भाषते—तव गृहं पतितं दृश्यते कथं तत्रोद्यमं न कुरुषे ?—तव पुत्री वृद्धाऽस्ति वरगवेषणं कुरु त्वं, त्वया सुष्ठु कृतो विवाहः तव पुत्रवधूटी भव्याऽस्ति तव गृहे महिषी दुर्बलाऽस्ति, यौतकं कथं न ददासि ? वध्वा आणकं कथं न क्रियताम् ? इत्यादिरूपामिति, तं गच्छं हे गुणसागर ! श्रमणगुणविवर्जितं 'जानीहि' अवगच्छ, अन्यत् किं कथ्यत इति ॥ १११ ॥

श्रमण्या आलापवर्जनं जकारमकारवर्जनं गा. १०९–१०

जत्थ य एगा समणी एगो समणो य जंपए सोम्म ! । नियबंधुणावि सद्धिं तं गच्छं गच्छगुणहीणं ॥ १०९ ॥

जत्थ य० ॥ यत्र चोत्सर्गेणैकाकिनी श्रमणी–मुण्डी एकाकिना निजबन्धुनाऽपि सार्द्धं जल्पति, यद्वा एकाकी साधुर्निजभगिन्याऽपि सार्द्धं जल्पति हे सौम्य !–हे गौतम ! तं गच्छं गच्छगुणहीनं जानीहि । यत एकाकिन्या सार्द्धं जल्पनेन बहुदोषोत्पत्तिर्भवति, कामवृत्तिमलिनत्वादिति । तथा च साध्वीनां जल्पनेन प्रीत्यादयो भवन्ति, उक्तञ्च—"संदंसणेण पीई १ पीईउ रई २ रईउ वीसंभो ३ । वीसंभाओ पणओ ४ पणयावि अ भवइ पडिबंधो ५ ॥ १ ॥" साध्वीनां संदर्शनेन साधूनां प्रीतिरुत्पद्यते १, प्रीत्या चित्तसमाधानं २, ततो विश्रम्भो–विश्वासः ३, विश्वासात्प्रणयः–स्नेहः ४, तस्मात्प्रतिबन्धः ५ ॥ १ ॥ "जह जह करेसि नेहं तह तह नेहो अ वड्ढइ तुमंसि । तेण नडिओमि वलियं जं पुच्छसि दुब्बलतरोसि ॥ १ ॥" हे साध्वि ! यथा यथा त्वं मम स्नेहं संपादयसि तथा २ मम त्वयि स्नेहो वर्द्धते, तेन स्नेहेन नटितोऽस्मि यत्त्वं पृच्छसि दुर्बलतरोऽसि ॥ २ ॥ "इय संदंसणसंभासणेण संदीविओ मयणवण्ही । बंभाई गुणरयणे डहइ अणिच्छेवि पमयाओ ॥ १ ॥" इति, स्त्रीणां रण्डाकुरण्डादीनां साध्वीनां मुण्डीवेषधारणीनां साधुसंयमनृपविषकन्यकानां च संदर्शनसंभाषणेन संदीपितो मदनवह्निर्ब्रह्मचर्यादीन् गुणरत्नान् प्रमादात् अनिच्छतोऽपि साधोर्दहतीति ॥ १०९ ॥

जत्थ जयारमयारं समणी जंपइ गिहत्थपच्चक्खं । पच्चक्खं संसारे अज्जा पक्खिवइ अप्पाणं ॥ ११० ॥

जथ० ॥ यत्र यकारं जकारं वा मकारं च, तत्र यकारजकारे यथा–दुष्टस्तवयोनिर्येन त्वमुत्पन्ना, याहि शठेन सार्द्ध–

॥ ३३ ॥

एकाकिवहिर्गमननिषेधः गा. १०८

जत्थ य एगा खुड्डी एगा तरुणी उ रक्खए वसहिं। गोयम ! तत्थ विहारे का सुद्धी बंभचेरस्स ? ॥ १०७ ॥

जत्थ य० ॥ यत्र च साध्वीगणे एका क्षुल्लिका एका तरुणी च, तुशब्दान्नवदीक्षिता च, रक्षति वसतिं हे गौतम ! तत्र 'विहारे' साध्वीचर्यायां 'का शुद्धिः' का निर्मलता 'ब्रह्मचर्यस्य' तुर्यव्रतस्य ?, अपि तु न काऽपीत्यर्थः। 'इत्थवि दोसा-कयाइ वसहीए एगा खुड्डी किड्डिज्जा कोइ अवहरिज्ज वा बलाउ वा कोइ सेविज्जा इच्चाइ बहुदोसा १। तरुणीए दोसा मोहोदएण फलादिणा चउत्थं सेविज्जा, एगागिणिं दट्ठूण तरुणा समागच्छंति, हासाइयं कुवंति, अंगे वा लग्गंति तओ उड्डाहो भवति, तप्फासाओ वा मोहोदओ भवति, सीलं भंजिज्ज वा, गब्भो वा भवति, जइ गालइ तो महादोसो भवइ, अह वड्ढइ तो पवयणे महाउड्डाहो भवति, अहवा पुव्वकीलियं समरमाणी वेस्साइयं वा दट्ठूण गच्छं मुत्तूण एगागी तरुणी साहुणी गच्छिज्जा, एवमाई दोसा भवंति तो उवस्सए एगा तरुणी ण मुत्तव्वे"त्ति ॥ १०७ ॥

जत्थ य उवस्सयाओ बाहिं गच्छे दुहत्थमित्तंपि। एगारत्तिं समणी का मेरा तत्थ गच्छस्स ? ॥ १०८ ॥

जत्थ० ॥ यत्र च गणे उपाश्रयाद्बहिरेकाकिनी रात्रौ 'श्रमणी' साध्वी द्विहस्तमात्रामपि भूमिं गच्छेत् तत्र गच्छस्य का मर्यादा ?। "इत्थवि दोसा-कयाई परदारसेवका रयणीए एगागिणि दट्ठूण हरिज्जा उड्डाहं वा करंति, पच्छन्नं वा रायाई भममाणो संकिज्जा-का एसा ?, चोरावि अवहरंति, वत्थाईयं वा गिण्हंति, अहवा कयाई गुरुणीए फरुसं चोयणं संभरमाणी पुव्वकीलियं वा रयणीए विसेसओ संभरइ तो एगागिणी कत्थवि गच्छिज्जा, इच्चाइ दोसमूलं णाऊण रयणीए एगागिणीए समणीए उवस्सयाओ बाहिं सया न गंतव्वं"त्ति ॥ १०८ ॥

तम्हा सम्मं निहालेउं, गच्छं संमग्गपट्ठियं । वसिज्जा पक्ख मासं वा, जावज्जीवं तु गोयमा ! ॥ १०५ ॥

तम्हा स० ॥ यस्मात्पूर्वोक्तगणनिवसनमनन्तसंसारभ्रमणकारणं मुक्त्वा तस्मात् 'सम्यक्' सर्वप्रकारेण 'निभाल्य' कुशाग्रीयबुद्ध्या पर्यालोच्य 'गच्छं' मुनिगणं सन्मार्गप्रस्थितं–मोक्षपथं प्रति चलितमित्यर्थः 'वसेत्' गुर्वाज्ञया तिष्ठेत् पक्षं यावत् मासं यावत् वाशब्दान्मासद्वयादिकं यावत् यावज्जीवं वा हे गौतम ! ॥ १०५ ॥

खुड्डो वा अहवा सेहो, जत्थ रक्खे उवस्सयं । तरुणो वा जत्थ एगागी, का मेरा तत्थ भासिमो ? ॥ १०६ ॥

खुड्डो वा० ॥ यत्र गणे 'क्षुल्लः' बालरूपः वाशब्दः पूरणे अथवा 'शैक्षः' नवदीक्षितः 'रक्षेत्' सदा प्रतिपालयेत् उपा- २०
श्रयं–साधुवसनस्थानं वा–अथवा 'तरुणो' युवा साधुर्यत्रैकाकी उपाश्रयं रक्षेत्, तत्र गणे का मर्यादा–कां जिनगणधराज्ञां भाषामहे वयं?, बहुदोषकारणत्वात्, तथाहि–एगो खुड्डो रमइ रममाणस्स अण्णे धुत्ताइया उवहिं हरंति, बालस्स वा भोलविऊण अण्णत्थ गच्छंति, वसहीए वा कयावि डज्झमाणाए खुड्डो वत्थाईगहणत्थं पविसति तत्थ वलइत्ति सप्पो वा डसइ, नडाइयपेच्छणत्थं च गच्छिज्जा एवमाई बाले दोसा १ । सेहे तु कयाई सघरं गच्छेज्जा अन्नत्थ वा गच्छेज्जा, अम्मापियरो अण्णो वा सयणो कयाइ मिलिज्जा स णेहेण रोइज्जा, भासासमिईं वा भंजिज्जा उड्डाहं वा करिज्जा एव- २५
माइ सेहे दोसा २ । तरुणे पुण कयाई मोहोदएणं हत्थकम्मं करिज्जा अंगादाणं वा किड्डाए चालिज्जा कयाई एगं तरुणं
वहूइओ रंडाकुरंडाओ आगच्छंति चउत्थं भंजिज्जा उड्डाहं वा करिज्जा, मोहोदएण गच्छं मुत्तूण गच्छिज्ज वा, एवमाई
एगागिस्स खुड्डाइयस्स दोसा 'निसीहचुण्णीओ'त्ति ॥ १०६ ॥ २८

क्रयविक्रयवर्जनं आरंभत्यागादि गा. १०३-४

जत्थ य मुणिणो कयविक्कयाइं कुव्वंति संजमब्भट्ठा । तं गच्छं गुणसायर ! विसं व दूरं परिहरिज्जा ॥ १०३ ॥

जत्थ य० ॥ यत्र गणे 'मुनयः' साधुवेषविडम्बकाः प्रवचनोपघातकारकाः आत्मक्लेशकारकाः 'कय'त्ति मूल्येन वस्त्र-
पात्रौपधशिष्यादिकं स्वीकुर्वन्ति 'विक्कयाइं'ति मूल्येनान्येषां वस्त्रपात्रजपमालादिकमर्पयन्ति, 'जत्थ ये' त्यत्र चकारादन्यैः
क्रयविक्रयादिकं कारापयन्ति कुर्वन्तमन्यमनुमोदयन्ति च, किंभूताः ?—संयमात्—पृथिव्यादिसप्तदशविधात् भ्रष्टाः—सर्वथा
यतनातत्परतारहिताः दूरीकृतचारित्रगुणा इत्यर्थः 'तं' पूर्वोक्तस्वरूपं 'गच्छं' गणं गुणानां—ज्ञानादिगुणानां सागरः—
समुद्रो गुणसागरस्तस्यामन्त्रणं 'हे गुणसागर !' हे शिष्य ! 'विषमिव' हलाहलविषमिव 'दूरं' अदर्शनं यथा स्यात्तथा परि-
हरेत् । अत्र विषं तूपमामात्रं येन विषादिक(ना)मरणं भवति न वा, परं गुणभ्रष्टगच्छसङ्गात् कुमतिग्रस्तगणसङ्गाच्चान-
न्तानि जन्ममरणानि अनन्ते संसारे भवन्तीति ॥ १०३ ॥

आरंभेसु पसत्ता सिद्धंतपरंमुहा विसयगिद्धा । मुत्तुं मुणिणो गोयम ! वसिज्ज मज्झे सुविहियाणं ॥ १०४ ॥

आरंभे० ॥ बहुवचनात् संरम्भसमारम्भयोरपि ग्रहः तेषु प्रकर्षेण—मनोवाक्कायव्यापारेण सक्ताः—तत्पराः प्रसक्ताः, यद्वा
आरम्भेषु—जीवोपमर्दकारिषु परिग्रहादिषु सक्ता—मेलनपालनादितत्परास्तान् सिद्धान्तेषु—आचाराङ्गादिश्रुतरत्नेषु पराङ्-
मुखाः—विपरीतवक्रास्तदुक्तानुष्ठानलेशशून्यत्वात् तत्परिज्ञानशून्यत्वाच्च, विषयो द्विधा कामरूपो भोगरूपश्च, तत्र कामः—
शब्दरूपलक्षणः भोगो—गन्धरसस्पर्शरूपस्तस्मिन् गृद्धान् मुक्त्वा मुनीन् हे गौतम ! 'वसेत्' निवासं कुर्यादिति, मध्ये, केषां ?—
सुष्टु—मनोवाक्कायेन शोभनमनुष्ठानं विहितं—निष्पादितं यैस्ते सुविहितास्तेषां सुविहितानामिति ॥ १०४ ॥

यत्रोक्तलक्षणा वहवो गीतार्थाः—सूत्रार्थज्ञातारो भवन्ति हे गौतम ! स गच्छो भणितः । अत्रानुकम्पादाने जयराजोदाहरणं, सुपात्रदाने सुबाहुकुमारोदाहरणं, शीलेऽनङ्गलेखोदाहरणं, तपसि स्कन्धककालीदेव्याद्युदाहरणं, भावनायां भरतोदाहरणं वाच्यमिति ॥ १०० ॥ उक्तमुत्तमगणस्वरूपमथाधमाधमगणस्वरूपमाह—

जत्थ य गोयम ! पंचण्ह कहवि सूणाण इक्कमवि हुज्जा । तं गच्छं तिविहेणं वोसिरिअ वइज्ज अन्नत्थ ॥१०१॥

जत्थ० ॥ यत्र गणे च हे गौतम ! 'पञ्चानां' घरट्टिका १ उहषल ( ऊखल ) २ चुल्लक ३ पानीयगृह ४ सारवण ५-लक्षणानां कथमपि 'सूनानां' अनाथाशरणजीववृन्दवधस्थानानां खट्टिकगृहसदृशानां मध्ये एकमपि भवेत् तं 'गच्छं' अधममुनिसमूहं 'त्रिविधेन' मनोवाक्कायेन कृतकारितानुमत्यात्मकेन 'व्युत्सृज्य' परि त्यक्त्वा 'व्रजेत्' गच्छेत् 'अन्यत्र' सत्परम्परागतगण इति ॥ १०१ ॥

सूणारंभपवत्तं गच्छं वेसुज्जलं न सेविज्जा । जं चारित्तगुणेहिं तु उज्जलं तं तु सेविज्जा ॥ १०२ ॥

सूणा० ॥ 'सूनारम्भप्रवृत्तं' षड्जीवमर्दनपरं खण्डन्याद्यधिकरणकर्त्तारं वा 'गच्छं' साध्वाभासगणं वेषेण—कल्पकम्बलीचोलपट्टरजोहरणमुखपोतिकादिलक्षणनेपथ्येन साधुद्रव्यलिङ्गेनेत्यर्थः उज्ज्वलं—सागरडण्डीरवत् परमश्वेतं वेषोज्ज्वलं न सेवेत, दुःखलक्षसंसारवर्द्धकत्वात्, कीदृशं सेवेत ? इत्याह—'यं' गणं 'चारित्रगुणैः' समितिगुप्त्यादिगुणैः 'उज्ज्वलं' निरतीचारमालोचितातीचारं वा तुशब्दाद् द्रव्यलिङ्गेन मलिनमपि तं गणं सेवेत, तुशब्दात्तद्गतमुनीनां वैयावृत्त्यादिकमपि कुर्वीत, संसारक्षयहेतुकत्वादिति ॥ १०२ ॥

कषायाभावः शीततपआदि गा. १००

कम्पमानाः संसरणं संसारो—भवभ्रमणं गर्भे वसनं वसतिः गर्भवसतिः संसारश्च गर्भवसतिश्च संसारगर्भवसती ताभ्यां,
यद्वा संसारे—चतुर्गत्यात्मके गर्भवसतयस्ताभ्यः 'नोदीरयन्ति' प्रशान्ताः सन्तः कुवाक्यादिना नोत्थापयन्तीत्यर्थः, कान्?—
'कषायान्' क्रोधादीन् मुनयो मुनीनां स गच्छः । अत्र कषायोदये उदाहरणानि वाच्यानि, यथा—क्रोधे गोघातकमरुको-
दाहरणं १, मानेऽचंकारिभट्टोदाहरणं २, मायायां पण्डार्योदाहरणं ३, लोभे आर्यमङ्गवाचार्योदाहरण ४ मिति ॥ ९८ ॥
तथा 'कारणे' गुरुग्लानशैक्षादिवैयावृत्त्यादिप्रयोजने सारणवारणनोदनादिकारणे वा 'अकारणे' बहिःप्रयोजनाभावे वा 5
'णं' वाक्यालङ्कारे, यद्वा मकारोऽलाक्षणिकः कारणाकारणेन, अथ कथमपि 'मुनीनां' ज्ञातागमतत्त्वानां कषायवि-
पाकवेत्तृणां 'उट्ठिहिंति' उत्पद्यन्ते—प्रकटीभवन्ति 'कषायाः' क्रोधादयः 'उदएवि'त्ति उत्पद्यमाना अपि यत्र 'रुंभेहिंति'
रुध्यन्ते क्षाम्यन्ते च यत्र स गच्छः ॥ ९९ ॥
सीलतवदाणभावण चउविहधम्मंतरायभयभीए । जत्थ बहू गीयत्थे गोयम ! गच्छं तयं भणियं ॥ १०० ॥
सीलत० ॥ दीयत इति दानं—सुपात्रानुकम्पादिकं १ शीलमष्टादशधाऽब्रह्मवर्जनं २ तप्यतेऽष्टप्रकारं कर्मानेनेति तपः— 10
रत्नावलीकनकावल्येकावलीमुक्तावलीश्रेणिवर्गघनप्रमुखषष्ठ्यधिकशतत्रय३६०भेदभिन्नं, उक्तञ्च श्रीगणिविद्याप्रकीर्णके—
"महा १ भरणि २ पुव्वाणि, तिण्णि उग्गा वियाहिया । एएसु तवं कुज्जा, सब्भिंतरबाहिरं ॥ १ ॥ तिण्णि सयाणि सट्ठाणि,
तवोकम्माणि आहिया । उग्गनक्खत्तजोएसु, तेसुमन्नतरं करे ॥ २ ॥" इति, भाव्यते—संसारस्वरूपमनित्यत्वेन
चिन्त्यतेऽनयेति भावना, इत्येवंरूपस्य चतुर्विधधर्मस्यान्तरायभयभीताः, सूत्रे तु बन्धानुलोम्यात् 'सीलतवदाणभावण'त्ति, 14

परुप्परं पीई भवइ, तओ सब्बेऽवि साहवो अज्जाए अणुवट्टंति, अज्जाणुरागरत्ता न मुणंति अप्पणो सज्झायपडिलेहणाइ-असंजमहाणी, तओ संघाडए संजमहाणिकारणीए रज्जं भवति, संजईए संघाडए रज्जं कुणमाणीए पयठाणीयावि पहाणपुरिसा रज्जुबंधणबद्धबइल्लतुल्ला भवंति, साहूणं च दुग्गई फलं भवइ, अओ उस्सग्गमग्गेण साहूहिं समं भोयणवेलाए अण्णत्थवि बहुसंसग्गो संजईए न कायव्वो'त्ति, साहुणाऽवि पढमपएण संजईण मंडलीए एगागिणा न गंतव्वं''ति ॥ ९६ ॥

अथ सन्मुनिसद्गणप्ररूपणेन सद्गणस्वरूपमाह—

जत्थ मुणीण कसाया, जगडिज्जंतावि परकसाएहिं । निच्छिंति समुट्ठेउं सुनिविट्ठो पंगुलो चेव ॥ ९७ ॥

धम्मंतरायभीए भीए संसारगब्भवसहीणं । न उईरंति कसाए मुणी मुणीणं तयं गच्छं ॥ ९८ ॥

कारणमकारणेणं अह कहवि मुणीण उट्ठहि कसाए । उदएवि जत्थ रुंभहि खामिज्जइ जत्थ तं गच्छं ॥ ९९ ॥

जत्थ० ॥ धम्मं० ॥ कारण० ॥ आसां व्याख्या यथा—यत्र गणे मन्वन्ते—जानन्ति तत्त्वस्वरूपमिति मुनयस्तेषां मुनीनां—परमर्षीणां 'कषायाः' क्रोधमानमायालोभरूपाः 'जगडिज्जंतावि'त्ति दीप्यमाना अपि—धगधगायमानं क्रियमाणा अपि, कैः?—परेषां—दासदासीमातङ्गद्विजामात्यभूपालादीनां कषाया उत्कटक्रोधादयस्तैः परकषायैः नेच्छंति समुत्थातुं मेतार्यगजसुकुमालस्कन्धकाचार्यशिष्यादीनां कषायवत्, 'चेव'त्ति यथार्थे यथा 'सु' इति अतिशयेन निविष्टः—स्थितः 'सुनिविष्टः' पदमपि गन्तुमसमर्थ इत्यर्थः 'पङ्गुलः' पङ्गुः उत्थातुं न शक्नोतीति ॥ ९७ ॥ अगाधसंसारसागरे पततां जीवानां धत्ते इति धर्मः—सर्वज्ञोक्तज्ञानदर्शनचरणरूपस्तस्यान्तरायो—निद्राविकथाकुमत्यादिविघ्नस्तस्माद्भीताः—त्रस्ताः, तथा 'भीताः'

दृढचारित्तं मुत्तं आइज्जं मइहरं च गुणरासिं । इक्को अज्झावेई तमणायारं न तं गच्छं ॥ ९४ ॥
दढचा० ॥ दृढं चारित्रं–पञ्चमहाव्रतादिलक्षणं यस्याः सा तथा तां 'मुक्तां' निःस्पृहां 'आदेयां' लोके आदेयवचनां
'मइहरं' ति मतिगृहं–गुणराशिं साध्वीं चशब्दात् महत्तरां यद्वा महत्तरपदस्थितां सर्वसाध्वीनां स्वामिनीमित्यर्थः, मह-
त्तरास्वरूपं यथा–"सीलत्था कयकरणा कुलजा परिणामिया य गंभीरा । गच्छाणुमया वुड्ढा महत्तरत्तं लहइ अज्जा ॥१॥"
एवंविधामप्येकाकिनीमार्यां 'एकः' अद्वितीयो मुनिः 'अध्यापयति' सूत्रतोऽर्थतो वा तन्त्रं पाठयतीत्यर्थः हे शिष्य ! तम-
नाचारं जानीहि, न तं गच्छं, 'मुत्तुं'ति पाठान्तरे यत्र गणे दृढचारित्रं मदहरं गुणराशिं एवंविधमाचार्यं मुक्त्वा–परित्यज्य,
एतदुक्तं भवति–एवंविधः कदाचिदध्ययनोद्देशकादिकं पाठयेदिति ॥ ९४ ॥
घणगज्जिय हयकुहए विज्जूदुग्गिज्झगूढहिययाओ । अज्जा अवारिआओ इत्थीरज्जं न तं गच्छं ॥ ९५ ॥
जत्थ समुद्देसकाले साहूणं मंडलीइ अज्जाओ । गोअम! ठवंति पाए इत्थीरज्जं न तं गच्छं ॥ ९६ ॥
घनस्य गर्जितं भाविनि दुर्ज्ञेयं हयस्य कुहकं–उदरस्थो वायुविशेषः विद्युत्–प्रतीतैव ता इव दुर्ग्राह्यं हृदयं यासां
ता आर्या अवारिताः–स्वेच्छाचारिण्यो यत्र गणे तत् स्त्रीराज्यं न तु स गच्छः ॥ ९५ ॥
जत्थ० ॥ यत्र गणे 'समुद्देशकाले' भोजनकाले साधूनां मण्डल्यां 'आर्याः' संयत्यः हे गौतम! 'पादौ स्थापयन्ति'
मण्डलीमध्ये आगच्छन्तीत्यर्थः, तत् स्त्रीराज्यं जानीहि त्वं, न तं गच्छम् । जओ–"अकाले पइदिणं आगच्छमाणीए
लोयाणं संका भवइ, भोयणवेलाए सागारियाऽभावेण मोकलमणेण आलावे संलावे भवइ, साहूणं चउत्थे संका भवइ,

यमासे गेण्हंति, चिक्खल्लपंथा वासं वा णोवरमए वाहिं वा असिवं दुब्भिक्खं एवमाइएहिं कारणेहिं चउपाडिवए ण णिग्गया तत्थ दो मासमज्झे कोइ वत्थाणि देज्जा ते पडिसेहंति,दोसु मासेसु पुण्णेसु गेण्हंति,जम्हा जे इह खित्ते वासावासमवट्ठिया तेसिं वत्थे दाहामोत्ति सड्ढयाण जो भावो सो निग्गएसु वोच्छिज्जइ, साहूणं वा जे वत्था संकप्पिया ते अण्णसाधूणं अण्णपासंडत्थाणं वा देंति, अप्पणा वा परिभुंजंति वा, बालअसहुगिलाणा सीयं पडंतं ण सहइ, एवमाइएहिं कारणेहिं दोहिं मासेहिं अपुण्णेहिंवि ओमत्थगपणगपरिहाणीए गहणं कायवंति, उडुबद्धे य मासकप्पं जत्थ ठिया तत्थवि उक्कोसेणं दो मासा परिहरंति, कारणे ओमत्थगपणगपरिहाणीए गेण्हंति, इच्चाइ उवहिवित्थरो निसीहदसमोद्देसओ णेओ"त्ति ॥ ९१ ॥ किञ्च—

अइदुल्लह भेसज्जं बलबुद्धिविवड्ढणंपि पुट्ठिकरं । अज्जालद्धं भुंजइ का मेरा तत्थ गच्छंमि ? ॥ ९२ ॥

अइदु० ॥ 'अतिदुर्लभं' दुष्प्रापं 'भेषजं' तथाविधचूर्णादिकं उपलक्षणत्वादौषधमपि बलं च–शरीरसामर्थ्यं वुद्धिश्च–मेधा तयोर्विवर्द्धनमपि 'पुष्टिकरं' शरीरगुणकरं 'आर्यालब्धं' साध्व्यानीतं यत्र गणे साधुभिर्भुज्यते तत्र 'का मेरा' का मर्यादा ?, न काचिदित्यर्थः ॥ ९२ ॥

एगो एगित्थिए सद्धिं, जत्थ चिट्ठिज्ज गोयमा ! । संजईए विसेसेण, निम्मेरं तं तु भासिमो ॥ ९३ ॥

एगो० ॥'एकः'अद्वितीयः साधुः एकाकिन्या–रण्डाकुरण्डादिस्त्रिया सार्द्धं'यत्र'गणे राजमार्गादौ वा तिष्ठेत् हे गौतम !, तथा एकाकिन्या संयत्या सार्द्धं 'विशेषेण' हास्यविकथादिबहुप्रकारेण यत्र गणे साधुभिः परिचयः क्रियते 'तु'पुनः तं गच्छं'निर्मर्यादं' जिनाज्ञाविकलं 'भाषामहे' कथयामः, एवं तं गच्छं निर्मर्यादं सद्गुणव्यवस्थाविकलं भाषयाम इति ॥ ९३ ॥

भावार्थस्त्वयं—कार्ये संपूर्णे कृते सतीत्यर्थः, उक्तञ्च निशीथपीठिकायाम्—"विसि कणग'त्ति विसघत्थस्स कणगं—सुवण्णं घेत्तुं घसिऊण विसणिग्घायणट्ठा तस्स पाणं दिज्जइ"त्ति ॥ ९० ॥ अथाऽऽर्यकाद्वारेण गणस्वरूपमाह—

जत्थ य अज्जालद्धं पडिगहमाईवि विविहमुवगरणं । परिभुंजइ साहूहिं तं गोयम! केरिसं गच्छं ? ॥ ९१ ॥

जत्थ य० ॥ यत्र च गणे 'आर्यालब्धं' साध्वीप्राप्तं पतद्ग्रहप्रमुखं 'विविधं' नानाभेदमुपकरणं परिभुज्यते साधुभिः कारणं विना 'हे गौतम!' हे इन्द्रभूते!, स कीदृशो गच्छो ?, न कीदृशोऽपीति । अत्र किञ्चिदुपकरणस्वरूपं निशीथतो यथा—"जे भिक्खू वा २ गणणातिरित्तं वा पमाणातिरित्तं वा उवहिं धरेइ,उवहिं धरेंतं वा साइज्जइ तस्स चउलहुयं" तथा "जो जिणकप्पिओ एगेणं कप्पेणं संथरइ सो एगं गेण्हइ परिभुंजइ वा,जो दोहिं सं० सो गेण्हइ परि०, एवं ततिओवि, जिणकप्पिओ वा जो अचेलो संथरइ सो अचेलो चेव अच्छइ, एस अभिग्गहविसेसो भणिओ, एतेण अधिकतरवत्थे ण हीलियव्वो जम्हा जिणाणं एसा आणा—सव्वेणवि तिण्णि कप्पा घेत्तव्वा थेरकप्पियाणं, जइवि अपाउएण संथरइ तहावि तिण्णि कप्पा णियमा घेत्तव्वा इति, जो सामण्णभिक्खू तस्सेयं वत्थप्पमाणं भणियं, जो पुण गणचिंतगो गणावच्छेयगो सो दुल्लहवत्थादिदेसे दुगुणपडोयारं तिगुणं वा, अहवा जो अतिरित्तो उवग्गहिओ वा सो सव्वो गणचिंतगस्स परिग्गहो भवइ, महाजणो त्ति गच्छो, तस्स आवत्तिकाले उवग्गहकरो भविस्सति"त्ति । तथा—"जेसु खित्तेसु चाउम्मासं कयं, तत्थ दो मासा वत्थं न गेण्हंति, किं कारणं?, जेण पासत्थाइ वासासुवि उवगरणं गेण्हंति, ण य चउपाडिवए पुणो णियमा विहरंति, तेण कारणेन तेहिं सुद्धे असुद्धे वा उवगरणे गहिए जं सेसगं सड्ढगा पयच्छंति तं सेसगं संविग्गाणं ण कप्पइ घेत्तुं सपरखेत्तेसु, तति-

पा० १४ सेलपा० १५ चम्मपा० १६ वइरपा० १७ करेइ करेंतं वा साइज्जइ धरेइ धरेंतं वा साइज्जइ परिभुंजइ परिभुंजंतं वा साइज्जइ तस्स चाउम्मासियं परिहारठाणं अणुग्घातियं ॥ जे भिक्खू वा भिक्खुणी वा अयबंधणाणि वा १ कंसबंधणाणि वा २ जाव १६ वइरबंधणाणि वा १७ करेइ करंतं वा साइज्जइ जाव परिभुजंतं वा साइज्जइ तस्सवि पुव्वपच्छित्तं ।" 'सयणासण'त्ति शयनानां—खट्वापल्यङ्कादीनां आसनानां—मञ्चिकाचाकलकादीनां चशब्दाद्दुसदवरकजीणकजलेचकशेत्रिजिकादीनां, तथा 'झुसिराणं'ति सच्छिद्राणां पीढफलकादीनां परिभोगो—निरन्तरव्यापारणम् । तथा यत्र च 'वारडिआणं'ति आद्यन्तजिनतीर्थापेक्षया रक्तवस्त्राणां 'तेकूडियाणं'ति नीलपीतविचित्रभातिभरतादियुक्तवस्त्राणां च 'परिभोगः' सदा निष्कारणं व्यापारः 'मुक्त्वा' परित्यज्य 'शुक्लवस्त्रं' यतियोग्याम्बरमित्यर्थः, क्रियत इति शेषः, का मर्यादा ?, न काचिदपि तत्र गणे इति ॥ ८८ ॥ ८९ ॥ कांस्यताम्रादिभ्यः स्वर्णरूप्यं बह्वनर्थकारीत्यतस्तन्निषेधं दृढयन्नाह—

**जत्थ हिरण्ण सुवण्णं हत्थेण पराणगंपि नो छिप्पे । कारणसमप्पियंपि हु निमिसखणद्धंपि तं गच्छं ॥ ९० ॥**

जत्थ हि० ॥ यत्र गणे 'हिरण्यस्वर्णं' पूर्वोक्तशब्दार्थं साधुः 'हस्तेन' स्वकरेण 'पराणगंपि'त्ति परकीयमपि—परसम्बन्ध्यपि 'न स्पृशेत्' न संघट्टयेत् 'कारणसमर्पितमपि' केनाप्यगारिणा केनापि भयस्नेहादिहेतुनाऽर्पितमपि 'निमेषक्षणार्द्धमपि' तत्र निमेषो—नेत्रसञ्चालनरूपः अष्टादशनिमेषैः काष्ठा काष्ठाद्वयेन लवः लवपञ्चदशभिः कला कलाद्वयेन लेशः लेशैः पञ्चदशभिः क्षणः तयोरर्द्धमपि स गच्छः । यद्वा यत्र परकीयमपि हिरण्यस्वर्णं हस्तेन साधुर्न स्पृशेत् कारणसमर्पितमपि,

॥ २८ ॥

मूलगुणहीननिर्घाटनं हिरण्यादिवर्जनं च गा.८७-८९

मूलगुणेहिं विमुक्कं बहुगुणकलियंपि लद्धिसंपन्नं । उत्तमकुलेऽवि जायं निद्धाडिज्जइ तयं गच्छं ॥ ८७ ॥

मूलगु०॥'बहुगुणकलितं' विज्ञानादिगुणवृन्दसहितमपि 'बहुलब्धिसंपन्नं' अनेकाहारवस्त्राद्युत्पादनलब्धिकलितं मधुक्षीराश्रवादिलब्धियुक्तं वा'उत्तमकुलेऽपि जातं' उग्रभोगादिके चान्द्रादिके वा कुले जातम्—उत्पन्नं,एवंविधगुणयुक्तमपि साधुसाध्वीवर्गं 'मूलगुणैः' प्राणातिपातविरमणादिभिः विशेषेण मुक्तं—भ्रष्टं विमुक्तं यत्राचार्याः 'निर्धाटयन्ति' तिरस्कारं कृत्वा स्वगणान्निष्काशयन्तीत्यर्थः 'तयं'ति स गच्छः, उपलक्षणात् स्त्यानर्द्धिनिद्राऽतिदुष्टस्वभावलक्षणमपि निष्काशयंतीति ॥ ८७ ॥

जत्थ हिरण्ण सुवण्णे धणधण्णे कंसतंबफलिहाणं । सयणाण आसणाण य झुसिराणं चेव परिभोगो ॥ ८८ ॥
जत्थ य वारडिआणं तेकूडिआणं च तहय परिभोगो । मुत्तुं सुक्किलवत्थं का मेरा तत्थ गच्छंमि ? ॥ ८९ ॥

जत्थ य हि०॥ जत्थ य वा०॥ यत्र गणे 'हिरण्यस्वर्णयोः' तत्र हिरण्यं—रूप्यं अघटितस्वर्णं वा स्वर्णं च घटितस्वर्णं, तथा 'धनधान्ययोः' तत्र धनं चतुर्धा—गणिमं—पूगफलनालिकेरादिकं १ धरिमं—गुडादि २ मेयं—घृतादि ३ पारिच्छेद्यं—माणिक्यादि ४, अत्राद्यन्तभेदेनाधिकारः, धान्यं—अपक्वयवगोधूमशालिमुद्गादि चतुर्विंशतिविधं, 'कंस'त्ति कांस्यानि—स्थालकच्चोलकादीनि पात्राणि 'तंब'त्ति ताम्राणि—ताम्रसम्बन्धिलोट्टिकादीनि स्फटिकरत्नमयानि भाजनादीनि, उपलक्षणत्वात् काचकपर्दिकादन्तादिबहुमूल्यानि पात्राणि, पात्रादिषु च पित्तलकादिवालिकानां बन्धनानि तेषां, तथा चोक्तं निशीथसूत्रे आचाराङ्गे च—"जे भिक्खू वा भिक्खुणी वा अयपायाणि वा १ कंसपा० २ तंबपा० ३ तउयपा० ४ सुवण्णपा० ५ रूप्पपा० ६ सीसगपा० ७ रीरियपा० ८ हारपुटपत्तिलोहपा० ९ मणिकायपा० १० संखपा० ११ सिंगपा० १२ दंतपा० १३ चेल-

**कीरइ बीयपएणं सुत्तमभणियं न जत्थ विहिणा उ । उप्पण्णे पुण कज्जे दिक्खाआयंकमाईए ॥ ८६ ॥**

कीरइ०॥ 'क्रियते' विधीयते 'द्वितीयपदेन'उत्सर्गपदापेक्षयाऽपवादपदेन 'सुत्तमभणिय'मित्यत्र मकारोऽलाक्षणिकः सूत्रे–बृहत्कल्पादौ अभणितं–भगवता अकथितं सूत्रभणितं साध्वीपदे न 'यत्र' गणे 'विधिवत्' शास्त्रोक्तप्रकारेण, तुशब्दोऽनेकद्रव्यक्षेत्रकालभावप्रकारसूचकः, 'उत्पन्ने' प्रकटीभूते पुनः कार्ये महालाभकारणे, किंभूते कार्ये ?–दीक्षायां गृहीतायां दीक्षाऽऽतङ्कादिकं तस्मिन्, आदिशब्दाद्विषमविहारादाविति, आतङ्क आदिर्यत्र तत्, स न गच्छ इति ॥ अत्र किञ्चिन्निशीथचूर्णिपञ्चदशोद्देशकगतं यथा–"एत्थ सीसो पुच्छइ–आगमे य पव्वावणिज्जा अज्जा अतो संसओ किं परियट्टियव्वाओ न परियट्टियव्वाओ ?, आयरिओ भणइ–णत्थि कोइ णियमो, जहा अवस्सं परियट्टियव्वाओ णत्थि वत्ति, जइ पुण पव्वावेत्ता आणाए परिवट्टति तो महानिज्जराए वट्टइ, अह अणाणाए उ पालेइ तो अतिमहामोहं पकुव्वइ, दीहं संसारं णिव्वत्तेइ, तो केरिसेण परियट्टियव्वाओ ? को वा परियट्टणे विही ?,अतो भण्णइ–सहू ! भीयपरिसित्ति २,एतेहिं दोहिं पदेहिं चउभंगो कायव्वो, सहू भीयपरिसे १ असहू भीयपरिसो २ सहू अभीयपरिसो ३ असहू अभीयपरिसो ४, तत्थ धितिबलसंपुण्णो इंदियणिग्गहसमत्थो थिरचित्तो य आहारुवहिखेत्ताणि य तप्पाउग्गाणि उप्पाएउं समत्थो एरिसो सहू १,जस्स भया सव्वो साहुसाहुणिवग्गो ण किंचि अकिरियं करेइ भया कंपइ एरिसो भीयपरिसो २, एत्थ पढमभंगिल्लस्स परिवट्टणं अणुण्णायं, सेसेसु तिसु भंगेसु णाणुण्णायं, अह परियट्टंति तो चउगुरुं, सो पढमभंगिल्लो जइ जिणकप्पं पडिवज्जओ अणुवट्टावगस्सासति जइ जिणकप्पं पडिवज्जइ तो चउगुरुगा, अण्णं च जिणकप्पठियस्स जा णिज्जरा सा उ विहीए संजतीओ अणुपालेयंतस्स विउलतरा णिज्जरा भवति"त्ति ॥ ८६ ॥ किञ्च—

ते त्रयोऽपि कुमारत्वे प्रव्रजिताः, सुकुमालिकाऽतिरूपतया न भिक्षाद्यर्थं गन्तुं शक्नोति, तरुणाः पृष्ठत आगच्छन्ति, तन्निमित्त-मुपाश्रयेऽप्यागच्छन्ति, गणिन्या गुरोः कथितं, तदा गुरुणा स्वभ्रातरौ रक्षार्थं भिन्नोपाश्रये तत्पार्श्वे मुक्तौ, तौ सहस्रयोधिनौ, तयोरेको भिक्षां हिण्डति अन्यस्तां रक्षति, एवं बहुकाले गते सति साधुपीडां दृष्ट्वा तयाऽनशनं कृतं, बहुभिर्दिनैः क्षीणा मूर्छां गता, मृतेतिकृत्वा एकेन सा गृहीता, द्वितीयेन तस्या उपकरणं गृहीतं, सा मार्गे शीतलवातेन गतमूर्छा भ्रातृस्पर्शेन सवेदा जाता, तथाऽपि मौनेन स्थिता, ताभ्यां परिष्ठापिता, तयोर्गतयोः सा उत्थिता, आसन्नं व्रजता सार्थवाहेन गृहीता, स्वमहिला कृता, कालेन भिक्षार्थमागताभ्यां भ्रातृभ्यां दृष्टा, ससंभ्रममुत्थिता दत्ता भिक्षा, तथाऽपि मुनी तां निरीक्षमाणौ तिष्ठतः, तयोक्तं–किं निरीक्षेथः?, तौ भणतः–अस्मद्भगिनी तव सदृक्षाऽभूत्, किन्तु सा मृता, अन्यथा न प्रत्यय उत्पद्यते आवयोः, तयोक्तं–सत्यं जानीथः, अहमेव सा, तया सर्वं पूर्वस्वरूपं कथितं, ताभ्यां सा वयःपरिणता सार्थवाहान्मोचिता दीक्षिता आलोच्य स्वर्गतेति ॥ ८४ ॥ किञ्च—

जत्थित्थीकरफरिसं लिंगी अरिहावि सयमवि करिज्जा । तं निच्छयओ गोयम ! जाणिज्जा मूलगुणभट्ठं ॥ ८५ ॥

जत्थित्थी०॥ यत्र गणे स्त्रीकरस्पर्शं 'लिङ्गी' मुनिः, किंभूतः?–'अर्हन्नपि' पूजादियोग्योऽपि स्वयमपि कुर्यात् तं गच्छं निश्चयतो हे गौतम! जानीयात् 'मूलगुणभ्रष्टं' पञ्चमहाव्रतरहितमिति ॥ पाठान्तरे तु–"जत्थित्थीकरफरिसं, अंतरिया कारणेवि उप्पन्ने । अरिहावि करिज्ज सयं, तं गच्छं मूलगुणमुक्कं ॥" सुगमा ॥ अत्र श्रीमहानिशीथपञ्चमाध्ययनोक्तसावद्या-चार्यस्य दृष्टान्तो ज्ञेय इति ॥ ८५ ॥ अथापवादमाह—

गच्छे स्त्रीस्पर्शवर्जनं

'तनुस्पर्शः' अङ्गस्पर्शो न च क्रियते हे इन्द्रभूते! स गच्छः । अत्र सूत्रे स्पर्शनिषेध उक्तः, एवमन्ये शब्दादयोऽपि त्याज्याः, यतः पुरुषस्पर्शेन पुरुषस्य मोहोदयो भवति न वा, यदि भवेत्तदा मन्दो न स्त्रीस्पर्शवदुत्कटः, स्त्रीस्पर्शेन पुनः पुरुषस्य नियमाद्भवति मोहोदय उत्कटः १ । एवं स्त्रियाः स्त्रीस्पर्शे सति भजना, स्त्रियाः पुरुषस्पर्शेन नियमान्मोहोदयः २ । तथा पुरुषस्य पुरुषशब्दं श्रुत्वा भजना, पुरुषस्येष्टे स्त्रीशब्दे श्रुतेऽवश्यं मोहोदयः ३ । एवं स्त्रिया अपि भावनीयम् ४ । तथैवमिष्टे रूपेऽपि जीवसहगते चित्रकर्मादिप्रतिमायां वा भाव्यम् । स्पर्शे उदाहरणानि यथा—"आणंदपुरं नगरं जितारी राया, वीसत्था भारिया, तस्स पुत्तो अणंगो नाम, बालत्ते अच्छिरोगेण गहिओ निच्चं रुयंतो अच्छइ, अन्नया जणणीए निगिन्नठियाए अहाभावेण जाणूरुअंतरे छोढुं उवगूढिओ, दोऽवि तेसिं गुज्झा परोप्परं समफिडिया, तहेव तुण्हिको ठिओ, लद्धोवाओ, रूयंतं पुणो पुणो तहेव करेइ ठायइ रुयंतो, पवड्ढमाणो तत्थेव गिद्धो मोत्तुं पियं विलपंतीं, पिता से मओ, सो रज्जे ठिओ, तहावि तं मायरं परिभुंजइ, सचिवाईहिं बुज्झमाणोवि णो ठिओत्ति १ ॥ तथा—"एगो वणिओ, तस्स महिला अतीव इट्ठा, सो वाणिज्जेण गंतुकामो तं आपुच्छइ, तीए भणियं—अहंपि गच्छामि, तेण सा नीया, सा गुब्बिणी, समुद्दमज्झे विणट्ठं पवहणं, सा फलगं विलग्गा अंतरदीवे लग्गा, तत्थेव पसूया दारगं, स दारगो संवुड्ढो, सा तत्थेव संपलग्गा, बहुणा कालेण अन्नपवहणे दुरुहित्ता सणगरमागया, तीए वुग्गाहिओ सो—मा लोगवुत्तेण अहं जणणित्तिकाउ परिच्चइयव्वा, स लोगेण भण्णइ—अगम्मगमणं मा करेहि, परिच्चयाहि, तहावि णो परिच्चयतित्ति २ ॥ तथा—"वासुदेवज्येष्ठभ्रातृजराकुमारपुत्रजितशत्रुराज्ञः शशकभशकपुत्रौ, तयोर्भगिनी देवाङ्गनातुल्या यौवनं प्राप्ता सुकुमालिका, अशिवेन सर्वकुलवंशे प्रक्षीणे

शस्त्रग्रहणं विषभक्षणं भस्मीकरणं जलप्रवेशनं भृगुपातादिकरणं कारणं विना तन्मोहभावना ५ । 'नाहियवायं'ति नास्तिकवादः,यथा नास्ति जीवः नास्ति परलोकः नास्ति पुण्यं नास्ति पापं इत्यादिकं 'नाहियवायं'ति मायया परविप्रतारणवचनं वा 'न क्रियते' न विधीयते साधुभिर्यत्र गणे, तथा 'धावनं' सामान्येन वक्रगत्या गमनं, यद्वा 'धावनं' अकाले कारणं विना वर्षाकल्पादिक्षालनं 'डेवनं' वेगेनाश्ववद्गमनं कोशिकतापसवत्, 'लङ्घनं'वाहादिकोल्लङ्घनं अर्हन्मित्रसाधुवत्, यद्वा 'लङ्घनं' परस्परकलहेन क्रोधादिना श्राद्धोपरि वाऽन्नपानादिमोचनं,'ममकारः' ममताकरणं वस्त्रपात्रोपाश्रयश्राद्धादिषु 'अवर्णोच्चारणं' अवर्णवादकथनमर्हदादीनामिति ॥ ८२ ॥

जत्थित्थीकरफरिसं अंतरिअं कारणेऽवि उप्पन्ने । दिट्ठीविसदित्तग्गीविसं व वज्जिज्जए गच्छे ॥ ८३ ॥

जत्थित्थी०॥ यत्र गणे 'स्त्रीकरस्पर्शं' साध्वीहस्तसङ्घट्टनं, उपलक्षणत्वात्पादादिसंघट्टनं 'अंतरिअ'मिति विना 'कारणे'त्ति कारणं, अत्र द्वितीयार्थे सप्तमी,कण्टकरोगोन्मत्तादिलक्षणं, 'अपि' समुच्चये, किंभूतं कारणं ?–'उत्पन्नं' संजातं,दृष्टिविषसर्पदीप्ताग्निविषमिव वर्जयेत् स गच्छः, यद्वा यत्र स्त्रीकरस्पर्श–गृहस्थरामाकरपादादिसङ्घट्टनं 'अन्तरे' वस्त्रादिव्यवधाने, अत्र प्राकृतत्वाद्विभक्तिपरिणामः, कारणे उत्पन्नेऽपि दृष्टिविषसर्पदीप्ताग्निविषमिव वर्जयेत् स गच्छ इति ॥ ८३ ॥

बालाए वुड्ढाए नत्तुअदुहिआइ अहव भइणीए । न य कीरइ तणुफरिसं गोयम ! गच्छं तयं भणियं ॥ ८४ ॥

बालाए०॥'बालायाः' अप्राप्तयौवनायाः 'वृद्धायाः' स्थविरायाः उपलक्षणत्वान्मध्यमायाः एवंविधायाः 'नप्तृकायाः' सुतसुतायाः 'दुहितृकायाः' सुतासुतायाः अथवा 'भगिन्याः' याम्याः उपलक्षणत्वान्मातुः पुत्र्याः कलत्रस्येत्यादिग्रहणं

संघट्टहास्यादिवर्जनं च गा. ८१-८२

भद्रकान्यतीर्थिकस्तस्य समीपे कारयन्त्यग्नियतनां यत्र हे इन्द्रभूते! 'तयं'ति स गच्छो भणितो मयेति ॥ ८० ॥

पुप्फाणं बीआणं तयमाईणं च विविहदव्वाणं । संघट्टणपरिआवण जत्थ न कुज्जा तयं गच्छं ॥ ८१ ॥

पुप्फाणं०॥ पुष्पाणि चतुर्विधानि, जलजानि १ स्थलजानि २, तत्र जलजानि सहस्रपत्रादीनि १ स्थलजानि—कोरण्टकादीनि २, तान्यपि प्रत्येकं द्विविधानि—वृन्तवद्धानि—अतिमुक्तकादीनि ३ नालवद्धानि च—जातिपुष्पप्रभृतीनि ४, तत्र यानि नालवद्धानि तानि सर्वाणि सङ्ख्येयजीवानि, यानि तु वृन्तवद्धानि तान्यसङ्ख्येयजीवानि, स्नुह्यादीनां पुष्पाणि अनन्तजीवात्मकानि, तेषां पुष्पाणां, तथा बीजानि—शालीगोधूमयववरट्टादीनि तेषां बीजानां त्वगादीनां च, आदिशब्दात्तृणमूलपत्राङ्कुरफलादीनां, विविधसजीवद्रव्याणां संघट्टनं—स्पर्शनं परितापनं—सर्वतः पीडनं यत्र न क्रियते स गच्छः ॥ ८१ ॥

हासं खेड्डा कंदप्प नाहियवायं न कीरए जत्थ । धावण डेवण लंघण ममकाराऽवण्णउच्चरणं ॥ ८२ ॥

हासं०॥'हास्यं' सामान्येन हसनं वक्रोक्त्या हसनं वा 'खेड्डा' इति क्रीडा वालकवद्गोलकादिना रमणमित्यर्थः, क्रीडा वाऽन्ताक्षरिका प्रहेलिकादानादिरूपा, 'कंदप्प'त्ति कन्दर्पभावना, उपलक्षणत्वात् किल्बिषिका २ भियोगिका ३ ऽऽसुरिक ४ मोहभावनाः ५, तत्र मायया परविप्रतारणवचनं वाऽट्टट्टहासहसनं अभृतालापाश्च गुर्वादिनाऽपि सह निष्ठुरवक्रोक्त्यादिरूपाः कामकथा कामोपदेशप्रशंसा कायचेष्टा वाक्चेष्टा परविस्मापकविविधोल्लापाः तत्कन्दर्पभावना १, सातरसर्द्धिहेतवे यन्मन्त्रयोगभूतिकर्मादिकरणं तदाभियोगिकभावना २, यत् श्रुतज्ञानादेः केवलिनां धर्माचार्यस्य सङ्घस्य साधूनां च निन्दाकरणं तत्किल्बिषिकभावना ३, यन्निरन्तरक्रोधप्रसरः, यच्च पुष्टालम्बनं विनाऽतीतादिनिमित्तकथनं तदासुरीभावना ४, यदात्मवधार्थं

इच्छि० ॥ हे इन्द्रभूते! 'इष्यते' वाञ्छा क्रियते 'यत्र' गणे 'सदा' सर्वकालं उग्रपदापेक्षया द्वितीयमपवादपदं तेनापि प्रगता असवः— प्राणा जीवा यस्मात्तत्प्रासुकं, किं? '—उदकं' जलं 'आगमविधिना' आचाराङ्गनिशीथादिसिद्धान्तोक्तप्रकारेण निपुणं यथा स्यात्तथा गच्छो भणितः ॥ ७८ ॥

जत्थ य सूलविसूइय अन्नयरे वा विचित्तमायंके । उप्पण्णे जलणुज्जालणाइ न करइ तयं गच्छं ॥ ७९ ॥

जत्थ०॥ यत्र च गणे शूले विशूचिकायां च, आर्षत्वाद्विभक्तिलोपः, अन्यतरस्मिन् वा 'विचित्रे' अनेकविधे 'आतङ्के' सद्योघातिरोगे 'उत्पन्ने' प्रादुर्भूते सति ज्वलनस्य—अग्नेरुज्ज्वालनं—प्रज्वलनं ज्वलनोज्ज्वालनं अग्न्यारम्भमित्यर्थः मुनयो न कुर्वन्ति, आदिशब्दादन्यदपि सदोषं, स गच्छः, आवश्यकोक्ताषाढाचार्यवदिति ॥ ७९ ॥

बीयपएणं सारूविगाइ सड्ढाइमाइएहिं च । कारिंती जयणाए गोयम ! गच्छं तयं भणियं ॥ ८० ॥

बीय०॥ 'द्वितीयपदेन' अपवादपदेन सारूपिकादिभिः श्राद्धादिभिश्च कारयन्ति 'यतनया' निशीथादिग्रन्थोक्तयतनाकरणेन, यथा—"साहुणो सूलं विसूइया वा होज्जा, तो तावणे इमा जयणा—महापीडाए जत्थ अगणी अहाकज्जो झियाइ तत्थ गंतुं सूलादि तावेयव्वं जइ गिहवइणो अचियत्तं न भवइ, अहव गुज्झगाणि तावेयव्वाणि ताणि य गिहत्थपुरओ न सक्कंति तावेउं तो ण गम्मइ" इत्यादियतनाविशेषो विशेषज्ञैर्विशेषसूत्राद्विज्ञेयः, तत्र प्रथमं मुण्डितशिराः शुक्लवासःपरिधायी कच्छां न बध्नीत अभार्याको भिक्षां हिण्डमानः सारूपिकस्तस्य समीपे, तस्याभावे सभार्याको वा शुक्लाम्बरधरो मुण्डितशिराः सशिखाकोऽदण्डकोऽपात्रकः सिद्धपुत्रकः, तस्याभावे त्यक्तचारित्रः पश्चात्कृतः, तस्याभावे गृहीताणुव्रतः श्राद्धः, तस्याभावे

काले यथा—"पणदिण मीसो लोट्टो अचालिओ सावणे य भद्दवए १। चउ आसोए कत्तिय २ मगसिरपोसेसु तिन्नि दिणा ३ ॥ १ ॥ पण पहर माहफग्गुणि ४ पहरा चत्तारि चित्तवेसाहा ५। जिट्ठासाढे तिपहर ६ अंतमुहुत्तं च चालियओ ॥ २ ॥" द्वीन्द्रियाः सकलजीवप्रदेशवन्तः सचित्ताः, विपर्ययादचित्ताः, जीवन्मृता एकत्र संमिलिता मिश्राः, एवं त्रीन्द्रियादयः । यतना यथा पृथिव्युदकयोर्गमने प्राप्ते पृथिव्यां गम्यं उदके पृथ्वीत्रसादिसद्भावात् १, पृथिवीवनस्पत्योः पृथिव्यां गम्यं न वनस्पतौ तद्दोषस्यापि संभवात् २, पृथिवीत्रसयोस्त्रसरहिते विरलत्रसे वा गम्यं निरन्तरे तु पृथिव्यामेव ३, जलवनस्पतिकाययोर्वनस्पतिना गम्यं उदके नियमाद्वनस्पतिसद्भावात् ४, इत्यादि ॥ ७५ ॥



खज्जूरिपत्तमुंजेण, जो पमज्जे उवस्सयं । नो दया तस्स जीवेसु, सम्मं जाणाहि गोयमा ! ॥ ७६ ॥

खज्जूरि०॥ खर्जूरपत्रमयप्रमार्जन्या मुञ्जमयबहुकर्या वा 'यः' साधुः उपाश्रीयते—भज्यते शीतादित्राणार्थं यः स उपाश्रयस्तमुपाश्रयं प्रमार्जयति तस्य मुनेर्जीवेषु 'दया' घृणा नास्ति हे गौतम! त्वं सम्यग् जानीहीति ॥ ७६ ॥

जत्थ य बाहिरपाणिअ बिंदूमित्तंपि गिम्हमाईसु । तण्हासोसिअपाणा मरणेऽवि मुणी न गिण्हंति ॥ ७७ ॥

जत्थ य० ॥ हे गौतम! यत्र च गच्छे 'वाह्यपानीयं' तटाककूपवापीनद्यादिसचित्तजलं 'बिन्दुमात्रमपि' जलकणमात्रकमपि, क्व ?—ग्रीष्मादिषु कालेषु, आदिशब्दाच्छीतवर्षाकालयोः, तृष्णया—द्वितीयपरीषहेण शोषिता—ग्लानिं प्रापिताः प्राणाः—उच्छ्वासादयो येषां ते तृष्णाशोषितप्राणाः प्राणान्तेऽपि 'मुनयः' साधवो न गृह्णन्ति स गच्छ इति खुड्डकवत् ॥ ७७ ॥



इच्छिज्जइ जत्थ सया बीयपएणावि फासुअं उदयं । आगमविहिणा निउणं गोअम! गच्छं तयं भणियं ॥ ७८ ॥

सचित्तादि पृथ्व्यादि-यतनाकारी गच्छः गा. ७५

पुढ० ॥ पृथ्वीदकाग्निमारुतानां वाशब्द एषां भेदसूचकः तुशब्दस्तु यतनासूचकः, वनस्पतित्रसाणां विविधानां मनसाऽपि मरणान्तेऽपि यत्राबाधा न क्रियते स गच्छः । तत्र पृथ्वीकायस्त्रिधा–सचित्ताचित्तमिश्रभेदात्, सचित्तो द्विधा–निश्चय-व्यवहाराभ्यां, रत्नशर्कराप्रभृतीनां महापर्वतानां हिमवदादीनां च बहुमध्ये यः स निश्चयतः सचित्तः १, शेषोऽरण्यादौ पृथ्वी-कायः स व्यवहारसचित्तः, उदुम्बरादिक्षीरद्रुमाणामधः पथि च मिश्रः, हलकृष्टो यः स तत्क्षणादेवार्द्रोऽशुष्कः क्वचि-न्मिश्रः २, शीतोष्णक्षारक्षत्राग्निलवणौषधकाञ्जिकस्नेहशस्त्रैरभिहतोऽचित्तः ३ । तथाऽप्कायोऽपि त्रिधा, घनोदधिघनवल-यकरकाः समुद्रमध्ये द्रहमध्ये च यः स निश्चयतः सचित्तः, शेषोऽगडादीनां व्यवहारतः सचित्तः १, अनुद्वृत्ते त्रिदण्डे मिश्रं वर्षे पतितमात्रं च मिश्रं चाउलोदकं यावद्बहु प्रसन्नं निर्मलं न स्यात्तावन्मिश्रं २, बहुप्रसन्ने त्वचित्तमेवेति ३ । तथेष्ट-काापाकादिमध्यगो विद्युदादिकश्च नैश्चयिकः अङ्गारादिको व्यावहारिकः सचित्तः १, मुर्मुरादिको मिश्रः २, ओदनव्यञ्जना-चाम्लावश्रवणादिकोऽचित्ताग्निकायः ३ । तथा घनतनुवाता निश्चयतः सचित्ताः, अतिहिमपाते यो वायुः अतिदुर्दिने च स नैश्चयिकः सचित्तः, प्राच्यादिवायुर्व्यवहारतः सचित्तः, क्षेत्रतो वायुभृतो दृतिर्जले एकहस्तशतगतश्चेदचित्तः, द्वितीय-हस्तशतप्रारम्भे मिश्रः, तृतीयहस्तशतप्रारम्भे सचित्तः, कालतः वायुपूरितो वस्तिः स्निग्धे उत्कृष्टमध्यमजघन्ये त्रिविधेऽपि काले एकद्वित्रिपौरुषीभिर्द्वित्रिचतुःपौरुषीभिस्त्रिचतुःपञ्चपौरुषीभिश्च यथाक्रममचित्तः मिश्रः सचित्तः स्यात्, रूक्षे त्रिविधेऽपि काले एकद्वित्रिभिर्द्वित्रिचतुर्भिस्त्रिचतुःपञ्चभिर्दिनैर्यथाक्रममचित्तः मिश्रः सचित्तः स्यात् । तथा सर्व एवानन्तवनस्पति-कायो निश्चयतः सचित्तः शेषः प्रत्येकवनस्पतिर्व्यवहारतः सचित्तः १, प्रम्लानफलकुसुमपर्णानि मिश्राणि, लोट्टस्य मिश्र-

कालातिक्रान्ते क्षेत्रातिक्रान्ते अनुद्गतेऽस्तमिते वा गृहीते कारणगृहीते उद्धरिते वा भक्तादिके विवेकः प्रायश्चित्तं, त्यजन् शुद्ध इत्यर्थः ५, नौनदीसन्तारसावद्यस्वप्नादिषु कायोत्सर्गः प्रायश्चित्तं ४, पृथ्व्यादीनां संघट्टादौ तपः प्रायश्चित्तं ६, यः षण्मासक्षमकोऽन्यो वा विकृष्टतपःकरणसमर्थस्तपसा गर्वितो भवति यथा किं ममानेन प्रभूतेनापि तपसा क्रियत इति तपःकरणासमर्थो वा ग्लानाऽसहबालवृद्धादिः तथाविधतपःश्रद्धानरहितो वा निष्कारणतोऽपवादरुचिर्वा भवति तस्य छेदः प्रायश्चित्तं, अहोरात्रपञ्चकदशकादिक्रमेण पर्यायच्छेदः क्रियत इति भावः ७, आकुट्टया पञ्चेन्द्रियवधे दर्पेण मैथुने उत्सन्नविहारे इत्यादौ मूलं प्रायश्चित्तं, पुनर्व्रतारोपणमिति भावः, भिक्षोर्नवमदशमप्रायश्चित्तापत्तावपि मूलमेव दीयते ८, स्वपक्षे परपक्षे वा निरपेक्षप्रहारिणि करादिघातके वा अर्थादाने इत्यादौ अनवस्थाप्यार्हं प्रायश्चित्तं, यावदुत्कृष्टं तपो नाचीर्णं तावद् व्रतेषु न स्थाप्यते पश्चात्तु स्थाप्यत इति भावः, एतत्प्रायश्चित्तमुपाध्यायस्यैव दीयते ९, तीर्थकरादीनां बहुश आशातनाकारिणि नृपघातके नृपाग्रमहिषीप्रतिसेवके स्वपरपक्षकषायविषयप्रदुष्टे स्त्यानर्द्धिनिद्रावति पाराञ्चिकप्रायश्चित्तं, स त्वव्यक्तलिङ्गधारी जिनकल्पिवत् क्षेत्राद्बहिः स्थाप्यते द्वादश वर्षाणि, यदि प्रभावनां करोति तदा शीघ्रमेव प्रवेश्यते गच्छे शुद्धत्वात्, इदं च प्रायश्चित्तमाचार्यस्यैव दीयते १०, तत्रानवस्थाप्यस्तपःपाराञ्चितकश्च प्रथमसंहननचतुर्दशपूर्वधरे गतौ, शेषाः पुनर्लिङ्गक्षेत्रकालानवस्थाप्यपाराञ्चिता यावत्तीर्थं तावद्भविष्यन्तीति ॥ ७४ ॥ अथ जीवरक्षादिद्वारेण गच्छस्वरूपमाह—

पुढविदगअगणिमारुअ वाउवणस्सइतसाण विविहाणं । मरणंतेऽवि न पीडा कीरइ मणसा तयं गच्छं ॥७५॥

वद्धयोर्गृहश्रेण्योरत्र पर्यटति, ६ तथा शम्बूकः–शङ्खस्तद्वत् या वीथिः सा शम्बूका, सा द्वेधा–यस्यां क्षेत्रमध्यभागात् शङ्खावर्त्तया परिभ्रमणभङ्ग्या भिक्षां गृह्णन् क्षेत्रबहिर्भागमागच्छति साऽभ्यन्तरशम्बूका ७, यस्यां तु क्षेत्रबहिर्भागात्तथैव भिक्षामटन् मध्यभागमायाति सा वहिःशम्बूका ८, तथा श्रीवीरस्योदुम्बरविषयोऽन्योऽपि स्वपरग्रामे गृहसङ्ख्याविषयः क्षेत्राभिग्रहः २, अमुकवेलायां मया भिक्षार्थं गन्तव्यमिति कालाभिग्रहः ३, तथा गायन् रुदन् अपसरणं कुर्वन् संमुखमागच्छन् पराङ्मुखः अलङ्कृतोऽनलङ्कृतः पुरुषो यदि दास्यति तदा मया ग्राह्यमित्ययं भावाभिग्रहः ४ इति ॥ ७३ ॥

मुणिणं नाणाभिग्गह दुक्करपच्छित्तमणुचरंताणं । जायइ चित्तचमक्कं देविंदाणंपि तं गच्छं ॥ ७४ ॥

मुणिणं० ॥ 'मुनीन्' साधून् 'नानाऽभिग्रहं' पूर्वोक्तलक्षणं दुष्करप्रायश्चित्तं चानुचरतो दृष्ट्वेति गम्यते 'जायते' उत्पद्यते चित्ते–मनसि चमत्कारः–आश्चर्यं चित्तचमत्कारः, केषां ?–देवेन्द्राणामपि यत्रैवंविधा मुनयो भवन्ति स गच्छः । तत्र प्रायश्चित्तं दशधा–आहारादिग्रहणोच्चारस्वाध्यायभूमिचैत्ययतिवन्दनार्थं पीठफलकप्रत्यर्पणार्थं कुलगणसङ्घादिकार्यार्थं च हस्तशताद्बहिर्निर्गमे आलोचना प्रायश्चित्तं भवति, आलोचना च गुरोः पुरतः प्रकटीकरणं तेनैव शुद्धिः १, समितिगुप्तिप्रमादे गुर्वाशातनायां विनयभङ्गे इच्छाकारादिसामाचार्यकरणे लघुमृषावादादत्तादानमूर्च्छासु अविधिनाऽऽवासादिकरणे कन्दर्पहास्यविकथाकषायविषयानुषङ्गादिषु प्रतिक्रमणं प्रायश्चित्तं मिथ्यादुष्कृतं, तेनैव शुध्यति न गुरुसमक्षमालोच्यते इति भावः २, सहसाऽनाभोगेन वा संभ्रमभयादेर्वा सर्वव्रतातिचारेषु उत्तरगुणातीचारेषु वा दुश्चिन्तितादिषु कृतेषु वा मिश्रं प्रायश्चित्तं, यद् गुरोः पुर आलोच्य तदादिष्टं मिथ्यादुष्कृतं दत्त इति भावः ३, पिण्डोपधिशय्यादिकेऽशुद्धे ज्ञाते यद्वा

मउए० ॥ द्रव्यभावभेदान्मृदुका द्विधा, तत्र द्रव्यमृदुका अर्कतूलादिकाः भावमृदुकाः सिद्धान्तयथोक्तकथकाः जिनोक्ते निःशङ्कादिस्वभावा वा 'निभृतस्वभावाः' अपवादापवादागमश्रवणे गुरुणा विद्यामन्त्रादिरहस्ये कथितेऽपि गम्भीरस्वभावाः गुर्वादिना ताडिता अपि गुरुकुलावासे निश्चलचित्ता वा 'हास्यद्रवविवर्जिताः' तत्र हास्यं–सामान्येन हसनं द्रवः–परोपहासः, यद्वा हास्यं–दन्तोद्घाटनादिना हसनं द्रवः–कर्करादिना क्रीडादिकरणं 'विगहमुक्के' विकथाविमुक्ताः 'असमञ्जसं' गुर्वाज्ञाभङ्गाद्यन्यायमकुर्वन्तः गोरिव चरणं गोचरस्तस्य भूमिर्गोचरभूमिस्तदर्थं विहरन्ति, अयं भावः–ज्ञानादिप्रयोजने भ्रमन्ति न निष्प्रयोजनमिति । यद्वा गोचरभूमिः–अभिग्रहस्य द्वितीयो भेदस्तस्याष्टौ भेदास्तदर्थं विचरन्ति, उपलक्षणादन्येऽपि ग्राह्याः । स चाभिग्रहो द्रव्यक्षेत्रकालभावभेदाच्चतुर्द्धा, तत्र लेपकृतं जगारिप्रमुखमलेपकृतं वा वल्लादिकं द्रव्यमहं ग्रहीष्यामि, अमुकेन वा दर्वीकुन्तादिना दीयमानमहं ग्रहीष्येऽयं द्रव्याभिग्रहः १ क्षेत्राभिग्रहेऽष्टौ गोचरभूमयो, यथा यस्यामेकां दिशमभिगृह्योपाश्रयान्निर्गतः प्राञ्जलेनैव पथा समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षार्थं परिभ्रमन् तावद् याति यावत्पङ्क्तौ चरमगृहं, ततो भिक्षामगृह्णन्नेवापर्याप्तेऽपि प्राञ्जलयैव गत्या प्रतिनिवर्त्तते सा ऋज्वी १, यत्र पुनरेकस्यां गृहपङ्क्तौ परिपाट्या भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयस्यां गृहपङ्क्तौ भिक्षामटति सा गत्वाप्रत्यागतिका २, यस्यां तु वामगृहाद्दक्षिणगृहे दक्षिणगृहाच्च वामगृहे भिक्षां पर्यटति सा गोमूत्रिका ३, यस्यां तु त्रिचतुरादीनि गृहाणि विमुच्याग्रतः पर्यटति सा पतङ्गवीथिका ४, यस्यां तु साधुः क्षेत्रं पेटावच्चतुरस्रं विभज्य मध्यवर्त्तीनि च गृहाणि मुक्त्वा चतसृष्वपि दिक्षु समश्रेण्या भिक्षामटति सा पेटा ५, अर्द्धपेटाऽप्येवमेव नवरमर्द्धपेटासदृशसंस्थानयोर्दिग्द्वयसं-

पात्रे एको मध्ये कल्पः १ द्वितीयो बहिः २ तृतीयस्तु सर्वत्रेति कल्पत्रयं ३ जघन्यतः १ शाकपेयायवागूकोद्रवौदनराद्धमुद्गदाल्याद्यल्पलेपकृदाहारे गृहीते पात्रे कल्पत्रयं मध्ये तत एक बहिर्मध्ये च तत एकः सर्वत्रेति कल्पपञ्चकं मध्यमतः २ क्षीरदधिक्षीरपेयातैलघृतमुद्गपानकातीवरसाधिके बहुलेपकृदाहारे गृहीते कल्पत्रयं मध्ये ततो द्वौ बहिर्मध्ये ततो द्वौ हस्तमुखपात्रबहिर्मध्ये सर्वत्रेति कल्पसप्तकमुत्कृष्टतः ३, सामान्येन च सर्वत्रापि कल्पसप्तकं देयमिति वृद्धवादः, हस्ते तु मणिबन्धं यावत्कल्पा देया इति। त्रेपः—अपानादिक्षालनविधिः, तथा चोक्तं श्रीनिशीथसूत्रतृतीयचतुर्थोद्देशके—"जे भिक्खू वा भिक्खुणी वा उच्चारपासवणं परिठावेत्ता परं तिण्हं णावापूराणं आयमइ आयमंतं वा साइज्जइ" सूत्रम्। अस्य चूर्णिः—"णावत्ति पसई ताहिं तिहिं आयमियव्वं, अण्णे भणंति—अंजलि पढमणावापूरं तिहा करेति, अवयवे विगिंचइ, वितियं णावापूरं तिहा करेत्ता सर्वावयवान् विसोहेइ, ततियं णावापूरं तिहा करेत्ता तिण्णि कप्पे करेइ, सुद्धं अतो परं जइ तो 'मासलहुं'"ति षट्कायवधदोषो बकुशत्वं च, कारणे तु "अतिरित्तेण आयमइ जेण वा निल्लेवं णिग्गंधं भवती"त्यर्थः, तथा कारणे तु मूत्रेणापि कल्पते, उक्तञ्च बृहत्कल्पे—"णो कप्पइ निग्गंथाण वा निग्गंथीण वा अण्णमण्णस्स मोयं आइयत्तए वा आयमित्तए वा णण्णत्थ गाढेसु वा रोगायंकेसु" नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा अन्योऽन्यस्य—परस्परस्य मोकं—मूत्रमापातुं वा आचमितुं वा, किं सर्वथैव ?, नेत्याह—गाढा—अहिविषविशूचिकादयः अगाढाश्च—ज्वरादयो रोगातङ्कास्तेभ्योऽन्यत्र न कल्पते, तेषु कल्पते इत्यर्थः इति, एवंविधाः साधवो यत्र भवन्ति स गच्छः ॥ ७२ ॥

मउए निहुअसहावे हासदवविवज्जिए विगहमुक्के। असमंजसमकरंते गोयरभूमट्ठ विहरंति ॥ ७३ ॥

नाय यत्प्रकल्पितं तदुद्दिष्टं १, यत्कृतोद्धृत्तं शाल्योदनादि दानाय करम्भः क्रियते तत्कृतं २, यत्कृतोद्धृत्तं मोदकचूर्णादि भूयः पाकगुडक्षेपेण दानाय मोदकाः क्रियन्ते तत्कर्म्म ३, तत्र च ये केचन अवपतन्ति तेभ्यो दातव्यमित्युद्देशः १, पाषण्डिनां दातव्यमिति समुद्देशः २, श्रमणानां—शाक्यादीनामादेशः ३, निर्ग्रन्थानाम्—आर्हतानां समादेश ४ इति । 'आहडमाईण'त्ति स्वपरग्रामादेर्जलस्थलपथेन पादाभ्यां नावादिना गन्त्यादिवाहनेन वा साध्वर्थं भक्तपानवस्त्रपात्राद्यानयनमभ्याहृतमुच्यते, तेषां, आदिशब्दात्पूतिव्यतिरिक्तानामन्येषां दोषाणां च, पूतिदोषस्त्वग्रे वक्ष्यमाणत्वात्, नामग्रहणेऽपि मुनयो भीता भवन्ति । 'पूईकम्म'त्ति आधाकर्मादि षोडशविध उद्गमः, स च सामान्यतो द्विधा—विशोधिकोटि १ रविशोधिकोटिश्च २, तत्राधाकर्म सभेदं १ विभागौद्देशिकस्य द्वादशविधस्यान्त्यं भेदत्रयं कर्मसमुद्देश १ कर्मादेश २ कर्मसमादेश ३—लक्षणं २ पूतिराधाकर्मलेशश्लेषः ३ मिश्रजातं पाषण्डिगृहिमिश्रं साधुगृहिमिश्रं ४, वादरप्राभृतिका गुर्वागमनं ज्ञात्वा विवाहादिलग्नस्याग्रतः पश्चात्करणलक्षणा ५ अध्यवपूरः स्वगृहपाषण्डिमिश्रः स्वगृहसाधुमिश्रः ६, इयमविशोधिकोटिः, अस्याः शुष्कसित्थुनाऽपि पूतिकर्म्म भवेत्, कल्पत्रये तु दत्ते शुध्यति, उद्गमस्य शेषं दोषजालं विशोधिकोटिः, अस्यां मिलितायां यदि विवेकः कर्त्तुं शक्यते तदा शुद्धिः, नो चेत् कल्पत्रयेणेति । तथा 'आउत्ता कप्पतिप्पेसु'त्ति कल्पत्रेपौ-असंसृष्टनीरादिना स्वस्वगच्छोक्तसमाचारीविशेषौ तयोरायुक्ताः, यद्वा आयुक्ता—उद्यमपराः, कयोः?—कल्पश्च—पात्रवस्त्रक्षालनलक्षणः त्रेपश्च—अपानादिक्षालनलक्षणः कल्पत्रेपौ तयोः कल्पत्रेपयोः, तत्र कल्पो जघन्यमध्यमोत्कृष्टभेदेन त्रिधा, कथं?-ओदनमण्डकयवक्षोदकुल्माषराजमाषचपलचपलिकावृत्तचनकसामान्यचनकनिष्पावतुवरीमसूरमुद्गाद्यलेपकृदाहारे गृहीते

सन्निध्यादिवर्जको गच्छः गा. ७२

अरहंत १५ चक्कवट्टी १६ बलदेवा १७ वासुदेवा य १८ ॥ २ ॥ खीरमहुसप्पिआसव १९ कुट्ठयबुद्धी २० पयाणुसारी य २१ । तह बीयबुद्धि २२ तेअग २३ आहारग २४ सीयलेसा य २५ ॥ ३ ॥ वेउविदेहलद्धी २६ अक्खीणमहाणसी २७ पुलाया य २८ । परिणामतववि सेसेण एमाई हुंति लद्धीओ ॥ ४ ॥ भवसिद्धियपुरिसाणं एयाओ २८ हुंति भणिय लद्धीओ । भवसिद्धियमहिलाणवि जत्तिय जायंति तं वुच्छं ॥ ५ ॥ अरिहंत १ चक्कि २ केसव ३ बल ४ संभिन्ने य ५ चारणे ६ पुव्वा ७ । गणहर ८ पुलाय ९ आहारगं च १० नहु भवियमहिलाणं ॥ ६ ॥ अभवियपुरिसाणं पुण दस पुव्विल्ला उ केवलित्तं च ११ । उज्जुमई १२ विपुलमई १३ तेरस एयाउ न हु हुंति ॥ ७ ॥ अभवियमहिलाणं पुण एयाओ न हुंति भणियलद्धीओ १३ । महुखीरासवलद्धीवि नेव सेसा उ अविरुद्धा ॥ ८ ॥" इति ॥ ७१ ॥

जत्थ य सन्निहिउक्खडआहडमाईण नामगहणेऽवि । पूईकम्मा भीआ आउत्ता कप्पतिप्पेसु ॥ ७२ ॥

जत्थ य० ॥ यत्र च गणे 'सन्निहि'त्ति आहारमनाहारं च तिलतुषमात्रमपि पानकं वा बिन्दुमात्रमपि तेषां निशास्थापनं संनिधिरुच्यते, संनिधिपरिभोगे रक्षणे च चतुर्गुरुः प्रायश्चित्तं आत्मसंयमविराधना अनवस्थाऽऽज्ञाभङ्गादिदोषाः गृहस्थतुल्यश्चेति, उक्तं च दशवैकालिके—"लोभस्सेसमणुप्फासो, मन्ने अन्नयरामवि । जे सिया सन्निहीकामे, गिही पव्वइए न से ॥ १ ॥" इति । अत्र द्वितीयपदं निशीथचूर्णितो ज्ञेयमिति । 'उक्खड'त्ति औद्देशिकं, तच्चौघविभागभेदाद्द्विधा, तत्र स्वार्थाग्निज्वालनस्थाल्यारोपणादिके व्यापारे यः कश्चिदागमिष्यति तस्य दानार्थं यत्क्रियते तदोघौद्देशिकं, विभागौद्देशिकं तु—उद्दिष्टकृतकर्मेति मूलभेदत्रयरूपं उद्देशसमुद्देशादेशसमादेशोत्तरभेदेन द्वादशविधं, तत्र स्वार्थमेव निष्पन्नं भिक्षादा-

भूतहृदयां यक्षाविष्टां उन्मादप्राप्तां उपसर्गप्राप्तां संयत्या गृहस्थेन वा समं साधिकरणां सप्रायश्चित्तप्रायश्चित्तभयेन विषण्णां प्रायश्चित्तं वहन्तीं तपसा क्लान्तां वा सर्वाङ्गीणं धारयन् देशतः साहयन् वा स्थानाङ्गपञ्चमस्थानकोक्तसभयादिकारणैरेकत्र तिष्ठन्नपि 'नयसरिसो'त्ति नयसदृशो भवति साधुः, कोऽर्थः ?—यथा नैगमादिभिः सप्तभिर्नयैः सूत्रं व्याख्यायमानं आज्ञां नातिक्रामति, एवमत्रापि जिनाज्ञां नातिक्रामति साधुः। तथा 'जाण असिलेसो'त्ति 'अश्लेषः' अबन्धकः 'जाण'त्ति ज्ञातव्यः, आर्षत्वात्तव्यप्रत्ययलोपोऽत्र, अशुभकर्मबन्धकारको न भवतीत्यर्थः । अस्या गाथाया अन्याऽपि यथागमं व्याख्या कार्येति ॥ ७० ॥ पुनः साधुशिक्षाप्रदानेन गुणवर्णनेन च गुणस्वरूपमाह—

**वायामित्तेणवि जत्थ भट्ठचरित्तस्स निग्गहं विहिणा । बहुलद्धिजुअस्सावी कीरइ गुरुणा तयं गच्छं ॥ ७१ ॥**

वाया० ॥ वाङ्मात्रेणापि, आस्तां क्रियया, भ्रष्टचारित्रस्य विधिना निग्रहं यत्र क्रियते यद्वा बहुलब्धियुक्तस्यापि स गच्छः, 'वाङ्मात्रेण' वचनव्यापारेण रे कुशील ! रे अपण्डित ! रे जिनाज्ञाभञ्जक ! रे सद्गच्छमर्यादावल्लीकन्दकुद्दाल ! इत्यादिना, अपिशब्दान्मनसा यथाऽयं न संयमगुणकारी अतः शिक्षा देयेत्यादिचिन्तनेन कायेन—करचालनशिरःकम्पनादिना यत्र गणे, कस्य ?—'भ्रष्टचारिस्य' शिथिलसंयमस्य 'निग्रहः' दण्डः 'विधिना' सूत्रोक्तप्रकारेण, कथंभूतस्य ?—'बहुलब्धियुक्तस्यापि' आमर्शौषधिविण्मूत्रौषधिश्लेष्मौषध्यादिसहितस्यापि 'क्रियते' विधीयते 'गुरुणा' स्वधर्माचार्येण 'तयं'ति स गच्छः । किञ्चिल्लब्धिस्वरूपं यथा—"आमोसहि १ विप्पोसहि २ खेलोसहि ३ जल्लओसही ४ चेव । सव्वोसहि ५ संभिन्नसोय ६ ओही ७ रिउ ८ विउलमइलद्धी ९ ॥ १ ॥ चारण १० आसीविस ११ केवली य १२ गणधारिणो १३ य पुव्वधरा १४ ।

भवति 'आत्मवशः' न कुत्रापि परवशो भवतीत्यर्थः, 'सः' मुनिर्भवति 'अनात्मवशः' परवशः य आर्याणां 'अनुचरत्वं कुर्वन्' सेवकत्वं निष्पादयन् तिष्ठतीति ॥ ६८ ॥ अत्र दृष्टान्तमाह—

**खेलपडिअमप्पाणं न तरइ जह मच्छिआ विमोएउं । अज्जाणुचरो साहू न तरइ अप्पं विमोएउं ॥ ६९ ॥**

खेल०॥ श्लेष्मपतितमात्मानं 'न तरति' न शक्नोति यथा मक्षिका 'मोचयितुं' पृथक् कर्त्तुं स्थानान्तरे गन्तुमित्यर्थः एवं 'आर्यानुचरः' साध्वीपाशबद्धपादः साधुः 'न तरति' न शक्नोति 'आत्मानं विमोचयितुं' स्वेच्छया ग्रामादिषु विहर्त्तुमित्यर्थः ॥ ६९ ॥

**साहुस्स नत्थि लोए अज्जासरिसा हु बंधणे उवमा । धम्मेण सह ठवंतो नयसरिसो जाण असिलेसो ॥ ७० ॥**

साहु० ॥ 'साधोः' मुनेः 'नास्ति' न विद्यते, क्व ?–'लोके' प्राकृतजने 'आर्यासदृशी' साध्वीतुल्या 'हुः' निश्चितं 'बन्धने' पाशलक्षणे 'उपमा' तत्सदृशं वस्त्वित्यर्थः, अपवादापवादमाह—'जाण'त्ति याः साध्वीः संयमभ्रष्टा धर्मेण सह स्थापयन् साधुः 'नयसदृशः' आगमवेदीत्यर्थः 'अश्लेषः' अबन्धको ज्ञातव्य इति । "क्वचिद्द्वितीयादेः" इति प्राकृतसूत्रेण जाणेत्यत्र द्वितीयार्थे षष्ठी । अथवा 'धर्मात्' श्रुतचारित्रात् काञ्चिद्भ्रष्टां 'ज्ञात्वा' दृष्ट्वा तत्पार्श्वे गच्छोपदेशपरिचयादिकं कृत्वा 'धर्मेण सह' श्रुतचारित्रलक्षणेन सह स्थापयन् उपलक्षणत्वात् अतीवगहनवृक्षदुर्गे व्याघ्रसिंहादिश्वापददुर्गे म्लेच्छादिभयमनुष्यदुर्गे गर्त्तापाषाणादिविषमस्थाने विषमपर्वते वा प्रस्खलमानां सर्वगात्रैः पतन्तीं वा बाह्वादावङ्गे गृह्णन् सर्वाङ्गीणं वा धारयन् एवमुदकपङ्कादौ अपकसन्तीं अपोह्यमानां वा नष्टचित्तां दीप्तचित्तां लाभादिमदेन परवशी-

किं पुण० ॥ किं पुनः 'तरुणः' युवा, किंभूतः ?–'अबहुश्रुतः' आगमपरिज्ञानरहितः, चकाराच्च देशादौ मुख्यत्वेन प्रवृत्तः, न चापि हु विकृष्टतपश्चरणो–न दशमादितपःकर्त्ता, एवंविधो मुनिः 'आर्यासंसर्ग्या' निष्कारणं मुण्ड्या सह विकथापरिचयादिकरणेन 'जनवचनीयतां' लोकापवादलक्षणां किं न प्राप्नुयात् ?, अपि तु प्राप्नुयादित्यर्थः ॥ ६५ ॥

**जइवि सयं थिरचित्तो तहावि संसग्गिलद्धपसराए । अग्गिसमीवे व घयं विलिज्ज चित्तं खु अज्जाए ॥ ६६ ॥**

जइ० ॥ यद्यपि 'स्वयं' आत्मना 'स्थिरचित्तः' दृढाध्यवसायः साधुस्तथाऽपि तस्य मुनेः संसर्ग्या–गमनागमनादिरूपया लब्धः–प्राप्तः प्रसरः–अवसरो घटीद्विघट्यादिवार्त्तालापादिरूपो यया सा तथा तया आर्यया अग्निसमीपे घृतवत् विलीयते रागवद्भवतीत्यर्थः 'चित्तं' साधोः साध्व्यध्यवसानरूपं 'खु' निश्चयेनेति ॥ ६६ ॥

**सवत्थ इत्थिवग्गंमि अप्पमत्तो सया अवीसत्थो । नित्थरइ बंभचेरं तव्विवरीओ न नित्थरइ ॥ ६७ ॥**

सव० ॥ 'सर्वत्र' दिवानिशागृहाङ्गणमार्गादिषु 'स्त्रीवर्गे' अनाथरण्डामुण्ड्यादिरामावृन्दे 'अप्रमत्तः' रामाभिः सह निद्राविकथादिप्रमादरहितः सन् 'सदा' सर्वकालं 'अविश्वस्थः (स्तः)' विश्वासरहितो रामासु एवंविधो 'निस्तरति' निरतीचारं पालयतीत्यर्थः, किं ?–'ब्रह्मचर्यं' मैथुनत्यागरूपं, 'तद्विपरीतः' उक्तविपर्यस्तो 'न निस्तरति' न ब्रह्मचर्यं पालयतीत्यर्थः ॥ ६७ ॥

**सवत्थेसु विमुत्तो साहू सवत्थ होइ अप्पवसो । सो होइ अणप्पवसो अज्जाणं अणुचरंतो उ ॥ ६८ ॥**

सवत्थे० ॥ 'सर्वार्थेषु' सर्वहेयपदार्थेषु 'विमुक्तः' ममतादिरहितः 'साधुः' मोक्षसाधकः 'सर्वत्र' क्षेत्रकालद्रव्यभावादिषु

आर्यानुचरदोषाः गा. ६२–७०

बाहुद्वय २ ऊरुद्वय ४ पृष्ठि ५ शिरो ६ हृदयो ७ दर ८ लक्षणानि, उपाङ्गानि–कर्णनासिकादीनि, चकारान्न विलोकयन्ति कदाचिद् दृष्ट्वाऽपि नान्यस्मिन् वर्णयन्ति स गच्छ इति ॥ ६२ ॥ किञ्च—

वज्जेह अप्पमत्ता अज्जासंसग्गि अग्गिविससरिसं । अज्जाणुचरो साहू लहइ अकित्तिं खु अचिरेण ॥ ६३ ॥

वज्जे० ॥ 'वर्जयत' मुञ्चत 'अप्रमत्ताः' प्रमादवर्जिताः सन्तो यूयं, कं ?–'आर्यासंसर्गं' एकान्तसाध्वीपरिचयादिकमित्यर्थः, किंभूतं ?–'अग्निविषसदृशं' यथाऽग्निना सर्वं भस्मसात्स्यात्तथाऽऽसां संयोगे चारित्रं भस्मसाद्भवति, यथा च तालपुटविषं जीवानां प्राणनाशकरं भवति तथाऽऽसां परिचयश्चारित्रप्राणनाशकरः, कूलवालुकवत् । तथा 'आर्यानुचरः' आर्या–साध्वी तस्या अनुचरः–किङ्करः, कः ?–'साधुः' मुनिः 'लभते' प्राप्नोति 'अकीर्तिं' असाधुवादं यथा अहो साधुत्वं अहो तपोधनत्वं अहो त्यक्तगृहगृहिणीसङ्गत्वं अहो शिवमार्गसाधकत्वं अहो इन्द्रियबाधकत्वमित्याद्यवर्णवादरूपं खु यस्मादर्थे 'अचिरेण' इति स्तोककालेन, अतो हे मुनयः ! आर्यासंसर्गं वर्जयतेति ॥ ६२ ॥

थेरस्स तवस्सिस्स व बहुस्सुअस्स व पमाणभूयस्स । अज्जासंसग्गीए जणजंपणयं हविज्जाहि ॥ ६४ ॥

थेर० ॥ 'स्थविरस्य' वृद्धस्य 'तपस्विनो वा' अष्टमादितपोयुक्तस्य वा 'बहुश्रुतस्य' अधीतबह्वागमस्य वा 'प्रमाणभूतस्य' सर्वजनमान्यस्य एवंविधस्य साधोरपि 'आर्यासंसर्गेण' बहुतमसाध्वीपरिचयेन 'जणजंपणयं'ति लोकमध्येऽपकीर्तिलक्षणं भवेत् यथा एष सुलक्षणो नेति ॥ ६४ ॥

किं पुण तरुणो अबहुस्सुओ अ नयवि हु विगिट्ठतवचरणो । अज्जासंसग्गीए जणजंपणयं न पाविज्जा ? ॥ ६९ ॥

हील्यते वचनोल्लङ्घनसम्मुखजल्पनमर्मोद्घाटनादिप्रकारेण चकाराद् यत्र पर्यायेण लघुतरोऽपि गुणवृद्धो न हील्यते वज्रं प्रति सिंहगिरिशिष्यरत्नवृन्दवत् हे गौतम! स गच्छ इति ॥ ६० ॥ अथाऽऽर्याधिकारमाह—

**जत्थ य अज्जाकप्पो पाणच्चाएवि रोरदुब्भिक्खे । न य परिभुंजइ सहसा गोयम ! गच्छं तयं भणियं ॥ ६१ ॥**

जत्थ य० ॥ यत्र च गणे आर्याकल्पः—साध्व्यानीतं रोरदुर्भिक्षे प्राणत्यागेऽपि 'सहस'त्ति सिद्धान्तोक्तविधिमकृत्वा न परिभुज्यते, यद्वा यत्र च गणे आर्याकल्पः—साध्व्यानीतमशनादिकमित्यर्थः सहसेत्युत्सर्गमार्गेण न परिभुज्यते, अपवादे तु परिभुज्यते, जङ्घावलक्षीणश्रीअन्यकापुत्राचार्यादिवत्, हे गौतम! 'गच्छः' गणः 'तयं'ति सः मया भणितः, आर्षत्वादत्र विभक्तिपरिणामः । अस्या गाथाया व्याख्यानमन्यदपि जिनाज्ञापूर्वकं कर्त्तव्यमिति ॥ ६१ ॥ अथोत्सर्गेण जल्पनपरिचयादिकं निवारयन्नाह—

**जत्थ य अज्जाहिं समं थेरावि न उल्लवंति गयदसणा । न य झायंति थीणं अंगोवंगाइं तं गच्छं ॥ ६२ ॥**

जत्थ य० ॥ यत्र गणे 'आर्याभिः' साध्वीभिः 'समं' सार्द्धं चकाराद्रण्डागतकान्तादिभिः स्त्रीभिः सार्द्धं च तरुणाः साधव आस्तां स्थविरा अपि 'नोल्लपन्ति' न निष्कारणमालापसंलापादिकं कुर्वन्तीत्यर्थः, स्थविरास्त्रिधा, तत्र षष्टिवर्षजाता जातिस्थविराः १ समवायधराः श्रुतस्थविराः २ विंशतिवर्षपर्यायाः पर्यायस्थविराः, ३ किंभूताः ?—गताः—प्रनष्टा दशना—दन्ता येषां ते गतदशनाः, 'न ध्यायन्ति' न सरागदृष्ट्या चिन्तयन्तीत्यर्थः 'स्त्रीणां' नारीणां, कानि?—'अङ्गोपाङ्गानि' तत्र अङ्गान्यष्टौ

जनकारणानि गा. ५९-६०

भुञ्जीत, किमिव ?–अक्षोपाङ्गमिव वहनार्थम्, एतदुक्तं भवति–यथाऽभ्यङ्गं शकटाक्षे युक्त्या दीयते न चातिबहु न चातिस्तोकं भरवहनार्थं साधूनामाहारः ॥ ५८ ॥ तमपि कारणे भुङ्क्तेऽतः कारणमाह—

**वेअण १ वेयावच्चे २ इरिअट्ठाए अ ३ संजमट्ठाए ४। तह पाणवत्तिआए ५ छट्ठं पुण धम्मचिंताए ६ ॥ ५९ ॥**

वेअण० ॥ क्षुद्वेदनोपशमनाय भुङ्क्ते, यतो नास्ति क्षुत्सदृशी वेदना, उक्तञ्च—"पंथसमा नत्थि जरा, दारिद्दसमो परिभवो नत्थि। मरणसमं नत्थि भयं, छुहासमा वेयणा नत्थि ॥ १ ॥" अतस्तत्प्रशमनार्थं भुञ्जीत १, बुभुक्षितः सन् वैयावृत्त्यं कर्त्तुं न शक्नोति, अतो गुरुग्लानशैक्षादिवैयावृत्त्यकरणाय भुञ्जीत २, 'ईर्यार्थं' ईर्यासमित्यर्थं ३, संयमः–प्रत्युपेक्षणाप्रमार्जनादिलक्षणः साधुव्यापारस्तत्पालनार्थं, बुभुक्षित एनं कर्त्तुं न शक्नोतीतिकृत्वा ४, तथा प्राणा–जीवितं तेषां वृत्त्यर्थं–रक्षार्थं परिपालननिमित्तमित्यर्थः५, षष्ठं पुनर्धर्मचिन्तार्थम्, सूत्रार्थानुचिन्तनादिलक्षणं शुभचित्तप्रणिधानं, एतदपि बुभुक्षितः कर्त्तुं न शक्नोतीतिकृत्वा भुञ्जीतेति शेषः ६ ॥ ५९ ॥

**जत्थ य जिट्ठकणिट्ठो जाणिज्जइ जिट्ठवयणबहुमाणो। दिवसेणवि जो जिट्ठो न य हीलिज्जइ स गोअमा! गच्छो॥६०॥**

जत्थ य० ॥ यत्र गणे 'ज्येष्ठः' व्रतपर्यायेण वृद्धः 'कनिष्ठः' दीक्षापर्यायेण लघुः, चशब्दान्मध्यमपर्यायोऽपि, ज्ञायते–अयं ज्येष्ठः अयं लघुः अयं मध्यमः इत्येवं प्रकटत्वेन विज्ञायते, कस्मात् ज्ञायते ?–ज्येष्ठवचनबहुमानात्–हे आर्य! हे पूज्य! हे भदन्त! हे पसाउकरी! इत्यादिजल्पनात्, यद्वा ज्येष्ठस्य–पर्यायगुणैर्वृद्धस्य वचनम्–आदेशो ज्येष्ठवचनं तस्य तस्मिन् वा बहुमानं–सन्मानं यत् पूज्यैः प्रतिपादितं तत्तथेत्येवं ज्ञायत इति, तथा यत्र दिवसेनापि यो ज्येष्ठः स न

स आहार एव उदरकुकुटी, उदरपूरकाहार इत्यर्थः, तस्य द्वात्रिंशत्तमो भागोऽण्डकं, तत्प्रमाणं कवलस्य १, गल एव कुकुटी तस्या अन्तरालमण्डकं, अयं भावः—अविकृतास्यस्य पुंसो गलान्तराले यः कवलोऽविलग्नः प्रविशति तत्प्रमाणं कवलस्य, भावकुकुटी तु येनाहारेण भुक्तेन न न्यूनं नाप्यत्याध्रातं स्यादुदरं धृतिं च समुद्वहति तावत्प्रमाण आहारो भावकुकुटीति २ । यद्वा 'जायमजायाहारे'त्ति जाताजाताहारपारिष्ठापनिकायां कुशलाः—निपुणा इत्यर्थः, तत्राधाकर्मणा लोभाद्गृहीतेन विषमिश्रेण मन्त्रादिसंस्कृतेन दोषेण च जातोच्यते, आचार्यग्लानप्राघूर्णकार्थे दुर्लभद्रव्ये सहसालाभे सत्यधिकग्रहणेऽजातोच्यत इति । अथवा जातो—गुरुग्लानादियोग्य आहार उत्पन्नस्तद्रक्षणे निपुणाः, तत्र वा निःस्पृहाः, अजातो—गुरुग्लानादियोग्य आहारः अनुत्पन्नस्तदुत्पादने कुशला इति । तथा 'द्विचत्वारिंशदेषणाकुशलाः' तत्रैषणा चतुर्धा, कस्याप्येषणेति नामेति नामैषणा १, एषणावतः साध्वादेरियमेषणेति स्थापनेति स्थापनैषणा २, द्रव्यैषणा—सचित्ताचित्तमिश्रद्रव्यभेदात्रिधा ३, भावैषणाऽपि गवेषणा १ ग्रहणैषणा २ ग्रासैषणा ३ भेदात्रिधा, तत्र गवेषणायामाधाकर्मादिधात्र्यादिद्वात्रिंशद्दोषाः, ग्रहणैषणायां शङ्कितादिदशदोषाः, ग्रासैषणायां संयोजनादिपञ्चदोषा विज्ञेया इति ॥५७॥

**तंपि न रूवरसत्थं न य वण्णत्थं न चेव दप्पत्थं । संजमभरवहणत्थं अक्खोवंगं व वहणत्थं ॥ ५८ ॥**

तंपि न० ॥ 'तमपि' आहारं न 'रूपरसार्थं' तत्र रूपं—शरीरलावण्यं रसश्च—भोजनास्वादस्तदर्थं न 'न च वर्णार्थं' न च शरीरकान्त्यर्थमित्यर्थः, 'न चैव दर्पार्थं' न चानङ्गवृद्ध्यर्थं भुञ्जीतेति शेषः, किन्तु 'संयमभरवहनार्थं' चारित्रभारवहनार्थं

बहुप्रदेशबहिःकर्षणेन, एवंविधेऽप्यवसरे ये ईदृग्विधास्ते सुन्दरान्तेवासिनः, यद्वा कण्ठगतः–कण्ठागतः प्राणस्य–बलस्य शेषो यत्र, एवंविधेऽप्यवसरे ये ईदृग्विधास्ते धन्या इति ॥ ५५ ॥

सद्गच्छलक्षणम् गा. ५६–७

गुरुणा कज्जमकज्जे खरकक्कसदुट्ठनिट्ठुरगिराए । भणिए तहत्ति सीसा भणंति तं गोअमा ! गच्छं ॥ ५६ ॥

गुरु० ॥ 'गुरुणा' स्वाचार्येण कार्यं चाकार्यं च कार्याकार्यं तस्मिन्, मकारोऽलाक्षणिकः, यत्कृत्यं गुरवो जानन्ति शिष्योऽपि जानाति तत्कार्यमुच्यते यत्कृत्यं गुरवो जानन्ति न तु शिष्यः तदकार्यं, अन्यथोत्तमानां किमपि बाह्यान्तरकार्यं विना जल्पनं न संभवतीति, यद्वा कार्यं–सनिमित्तं अकार्यं–प्रधाननिमित्तरहितमिति । 'खरकर्कशदुष्टनिष्ठुरगिरा' पूर्वोक्तशब्दार्थया 'भणिते' कथिते सति 'तहत्ति'त्ति तथेति यथा येन प्रकारेण यूयं वदथ तथा तेन प्रकारेणेति 'शिष्याः' सुविनेयाः 'भणन्ति' कथयन्ति यत्र तं गच्छं हे गौतम ! त्वं जानीहीति, सिंहगिरिगुरुशिष्यवदिति ॥५६॥

दूरुज्झिय पत्ताइसु ममत्तए निप्पिहे सरीरेऽवि । जायमजायाहारे(जत्तयमत्ताहारे) बायालीसेसणाकुसले ॥ ५७ ॥

दूरु० ॥ 'दूरुज्झिय'त्ति प्राकृतत्वाद्विभक्तिलोपः दूरतस्त्यक्तं ममत्वं, क ?–पात्रादिषु, आदिशब्दाद्वस्तुवसतिश्राद्धनगरग्रामदेशादिषु यैरिति शेषः, तथा 'निःस्पृहाः' ईहारहिता मेघकुमारादिवत् 'शरीरेऽपि' स्ववपुष्यपि, 'यात्रामात्राहारकाः' तत्र यात्रा–संयमगुरुवैयावृत्त्यस्वाध्यायादिरूपा मात्रा तु–तदर्थमेव पुरुषस्त्रीषण्ढानां द्वात्रिंशदष्टाविंशतिचतुर्विंशतिक्रमेण कवलप्रमाणमध्यात्परिमिताहारग्रहणमिति, कवलप्रमाणं च कुकुट्यण्डं, कुक्कुट्या अण्डं कुकुट्यण्डं, कुकुटी द्विधा–द्रव्यभावभेदतः, द्रव्यकुकुटी द्विधा–उदरकुकुटी १ गलकुकुटी च २, तत्र साधोरुदरं यावन्मात्रेणाहारेण न न्यूनं नाप्याध्मातं

खर० ॥ खरपरुषकर्कशया गिरा अनिष्टदुष्टया गिरा निष्ठुरगिरा निर्भर्त्सननिर्द्धाटनादिभिश्च, मोऽलाक्षणिकः, 'ये' मुनयो 'न प्रद्विष्यन्ति' न प्रद्वेषं यान्ति ते सुसाधवो गणयोग्या इति, तत्र खरा रे मूढ! रे अपण्डित! इत्यादिका, परुषा रे प्रमादिन्! रे कुशील! रे सामाचारीभञ्जक! इत्यादिका, कर्कशा रे जिनाज्ञाभञ्जक! रे उत्सूत्रभाषक! रे व्रतभञ्जक! इत्यादिका, अनिष्टा रे पापिष्ठ! मुखं मा दर्शय, रे निर्दय! इतो व्रज, रे वीरवचनोल्लङ्घक! स्वस्थानं कुरु इत्यादिका, दुष्टा रे आचारतस्कर! रे जिनप्रवचननगरप्राकारच्छिद्रकर्त्तः! रे जिनागमकोशार्थरत्नचौर! इत्यादिका, निष्ठुरा रे सूत्रार्थोभयप्रत्यनीक! रे निह्नवकुशीलसङ्गकर्त्तः! रे जिनाज्ञारामच्छेदक! इत्यादिका, निर्भर्त्सनम्-अङ्गुल्यादिना तर्जनं, निर्द्धाटनं-वसतिगणादिभ्यो निष्काशनं, आदिशब्दात्तच्चिन्ताकरणादिकं, यद्वा प्रवाहेणैकार्थिका एते शब्दाः, यद्वाऽन्योऽपि यः सत्परम्परागतोऽर्थः स सङ्ग्राह्य एवेति ॥ ५४ ॥

जे अ न अकित्तिजणए नाजसजणए नाकज्जकारी य । न पवयणुड्डाहकरे कंठग्गयपाणसेसेऽवि ॥ ५५ ॥

जे अ० ॥ 'ये' गणमुनयः नाकीर्त्तिजनकाः नायशोजनकाः, चकारान्नावर्णजनकाः, नाशब्दजनकाः नोऽश्लाघाजनकाः, तत्र सर्वदिग्व्याप्यसाधुवादोऽकीर्त्तिः, अयशो-निन्दनीयतादि, एकदिग्व्याप्यसाधुवादोऽवर्णः, अर्द्धदिग्व्याप्यसाधुवादोऽशब्दः, तत्स्थान एवासाधुवादोऽश्लाघेति, 'नाकार्यकारिणः' नासदनुष्ठानकर्त्तारः 'न प्रवचनोड्डाहकराः' न प्रवचनमालिन्यकर्त्तारः, कण्ठे गतः-प्राप्त आगत इत्यर्थः कण्ठगतः प्राणानां-जीवस्य शेषो यत्र, अधस्तनप्रदेशाकर्षणेन

शीतोष्णयोरेकदैकत्वात् चर्याशय्ययोरेकदैकत्वाच्चेति । तथा उपशान्तमोहे—एकादशगुणस्थाने क्षीणमोहे—द्वादशगुणस्थाने छद्मस्थवीतरागे त एव चतुर्दश, यतः सप्तानां चारित्रमोहनीयप्रतिबद्धानां मोहनीयस्य क्षपितत्वेनोपशमितत्त्वेन वा दर्शनमोहनीयप्रतिबद्धस्य एकस्य च तत्रासम्भवादिति पूर्ववत्, द्वादश पुनर्वेदयति ते, सयोग्ययोगिरूपे एकादश परीषहाः संभवन्ति, यथा क्षुत् १ पिपासा २ शीतो ३ ष्ण ४ दंश ५ चर्या ६ वध ७ मल ८ शय्या ९ रोग १० तृणस्पर्श ११ रूपाः, जिने वेद्यस्य संभवात् न यांति, शीतोष्णयोरेकदैकत्वात् चर्याशय्ययोरेकदैकत्वाच्च न च पुनर्वेदयति, धिया राजन्त इति धीराः वज्रस्वामिवत्, नापि स्तब्धा—नाहङ्कारपराः स्कन्धकवत्, नापि लुब्धा—नाहारोपधिपात्रादिगृद्धा धन्यमुनिवत्, न गौरविता—न गौरवत्रिकासक्ता मथुरामङ्गुशिष्यवत्, न विकथाशीला—न विरुद्धकथाकथनस्वभावा हरिकेशमुनिवत् ॥ ५२ ॥

सद्गच्छलक्षणम् गा. ५२

खंते दंते गुत्ते मुत्ते वेरग्गमग्गमल्लीणे । दसविहसामायारीआवस्सगसंजमुज्जुत्ते ॥ ५३ ॥

खंते० ॥ 'क्षान्ताः' क्षमायुक्ता गजसुकुमालवत्, 'दान्ताः' दमितेन्द्रियाः शालिभद्रादिवत्, 'गुप्ताः' नवब्रह्मचर्यगुप्तिमन्तः श्रीस्थूलभद्रवत्, 'मुक्ताः' न लोभयुक्ता जम्बूस्वाम्यादिवत्, 'वैराग्यमार्गमालीनाः' संवेगपथमाश्रिताः अतिमुक्तककुमारकालोदाय्यादिवत्, दशविधसामाचार्याम्—उक्तलक्षणायामुद्युक्ताः, अवश्यं कर्त्तव्यमावश्यकं यद्वा गुणानां आ—समन्ताद्वश्यं करोतीत्यावश्यकं, गुणशून्यमात्मानं आ—समन्ताद् वासयति गुणैरित्यावासकमनुयोगद्वारोक्तलक्षणं तत्रोद्युक्ताः—तत्पराः ॥ ५३ ॥

खरफरुसकक्कसाए अणिट्ठदुट्ठाइ निट्ठुरगिराए । निब्भच्छणनिद्धाडणमाईहिं न जे पउस्संति ॥ ५४ ॥

गुरुणो छंदणुवत्ती सुविणीए जियपरीसहे धीरे । नवि थद्धे नवि लुद्धे नवि गारविए न विगहसीले ॥ ५२ ॥

'गुरोः' स्वाचार्यस्य 'छन्दोऽनुवृत्तयः' अभिप्रायानुचारिणो, न स्वाभिप्रायचारिणः, 'सुविनीताः' शोभनविनययुक्ताः जिताः-पराजिताः परीषहाः-शीतोष्णा यैस्ते जितपरीषहाः, उक्तं चाचाराङ्गनिर्युक्तौ-"इत्थीसक्कारे परीसहा य दो भावसीयला एए । सेसा वीसई उण्हा परीसहा होंति णायवा ॥ १ ॥ जे तिव्वपरीणामा परीसहा ए भवंति उण्हा उ । जे मंदपरीणामा परीसहा ते भवे सीया ॥ २ ॥" तथा च ज्ञानावरण १ वेदनीय २ मोहनीया ३ न्तरायेषु ४ क्षुत्पिपासा २ शीतोष्ण ४ दंशा ५ चेला ६ रति ७ स्त्री ८ चर्या ९ नैषेधिकी १० शय्या ११ ऽऽक्रोश १२ वध १३ याञ्चा-१४ ऽलाभ १५ रोग १६ तृणस्पर्श १७ मल १८ सत्कार १९ प्रज्ञा २० ऽज्ञान २१ सम्यक्त्व २२ लक्षणा द्वाविंशतिरप्यवतरन्ति, यथा दर्शनमोहे सम्यक्त्वपरीषहः, तदुदये तस्य भावात् १, प्रज्ञाऽज्ञाने द्वे ज्ञानावरणे ३, अलाभोऽन्तराये ४, आक्रोशारतिस्त्रीनैषेधिक्यः अचेलयाञ्चासत्कारपुरस्काराः सप्त चारित्रमोहेऽवतरन्ति ११, क्षुत्पिपासा २ शीतोष्ण-४ दंश ५ चर्या ६ शय्या ७ मल ८ वध ९ रोग १० तृणस्पर्श ११ एते एकादश वेदनीयोदये भवन्ति, शेषेषु दर्शनावरणनामायुर्गोत्रेषु नास्त्यवतारः परीषहाणामिति । तथा नवमगुणस्थानकं यावत्सर्वेऽपि परीषहाः संभवन्ति, पुनर्वेदयति विंशतिमेव, यतो यस्मिन् समये शीतं वेदयति न तस्मिन् समये उष्णत्वं वेदयति, यस्मिन्नुष्णं तस्मिन् शीतं न, तथा यस्मिन् चर्यां वेदयति तस्मिन् नैषधिकीं न, यस्मिन् नैषेधिकीं तस्मिन् चर्यां न वेदयतीति । सूक्ष्मसंपराये-दशमगुणस्थाने क्षुत्पिपासाशीतोष्णदंशचर्याशय्यावधालाभरोगतृणस्पर्शमलप्रज्ञाऽज्ञानरूपाश्चतुर्दश भवन्ति, द्वादश पुनर्वेदयति,

अगच्छस्वरूपं गच्छवासफलम् गा. ५०–५१

ज्ञए'त्ति कुशीलो दूरे तिष्ठतु, तदाश्रितस्यापि सङ्गं न कुर्यात्, यद्वा कुशीलस्य उपलक्षणत्वादगीतार्थस्य 'अदिन्नए'त्ति सङ्गं न कुर्यात्, अनन्तसंसारहेतुकत्वात्, उक्तञ्च श्रीमहानिशीथद्वितीयाध्ययनप्रान्ते—"जीव संमग्गमाइण्णो, घोरवीरतवं चरो। अचयंतो इमे पंच, कुज्जा सव्वं निरत्थयं ॥ १ ॥ पासत्थोसन्नहाछंदे, कुसीले सबले तहा। दिट्ठीएवि इमे पंच, गोयमा! न निरिक्खए ॥ २ ॥" सुमतिवदिति ॥ ४९ ॥ अथ पूर्वोक्तगच्छस्वरूपमाह—

**पजलंति जत्थ धगधगस्स गुरुणावि चोइए सीसा। रागद्दोसेणवि अणुसएण तं गोयम! न गच्छं ॥ ५० ॥**

पज० ॥ प्रज्वलन्ति अग्निवत् यत्र गणे कथं?—धगधगायमानं यथा स्यात्तथा प्राकृतत्वाद्विभक्तिपरिणामः 'गुरुणा' स्वाचार्येणापि अपिशब्दाद्गणावच्छेदस्थविरादिनाऽपि 'चोइए'त्ति भवादृशामयुक्तमेतदित्यादिना प्रेरिताः, के?—'शिष्याः' स्वान्तेवासिनः, काभ्यां प्रज्वलन्ति?—रागद्वेषाभ्यां, प्राकृतत्वात्सूत्र एकवचनं, अपिशब्दश्चशब्दार्थे, 'अनुशयेन' च क्रोधानुबन्धेन, निरन्तरक्रोधकरणेनेत्यर्थः, यद्वा प्रज्वलन्ति, केन?—रागद्वेषेण, किंभूतेन?—'विअणुसएण'त्ति विगतो—गतोऽनुशयः—पश्चात्तापः पश्चादपि यत्र स व्यनुशयस्तेन 'व्यनुशयेन' सदा गतपश्चात्तापेनेत्यर्थः हे गौतम! स गच्छो न भवतीति ॥५०॥

**गच्छो महाणुभावो तत्थ वसंताण निज्जरा विउला। सारणवारणचोअणमाईहिं न दोसपडिवत्ती ॥ ५१ ॥**

गच्छो० ॥ 'गच्छो' मुनिवृन्दरूपः, किंभूतः?—महान् अनुभावः—प्रभावो यस्यासौ महानुभावः, 'तत्र' गच्छे 'वसतां' वासं कुर्वतां 'निर्जरा' देशकर्मक्षयरूपा, उपलक्षणत्वात्सर्वकर्मक्षयरूपो मोक्षोऽपि भवतीति शेषः, किंभूता?—'विपुला' विस्तीर्णा तथा यत्र च वसतां सारणवारणनोदनादिभिः पूर्वोक्तशब्दार्थैः, मोऽलाक्षणिकः, 'दोषप्रतिपत्तिः' दोषागमो न भवति ॥५१॥

परमत्थओ न तं अमयं, विसं हालाहलं खु तं । न तेण अजरामरो हुज्जा, तक्खणा निहणं वए ॥ ४७ ॥

अगी० ॥ पर० ॥ 'अगीतार्थस्य' पूर्वोक्तचतुर्थभङ्गस्थस्य वचनेन अमृतमपि 'न घुण्टेत्' न पिबेत्, येन कारणेन न तद्भवेत् अमृतं, यदगीतार्थदेशितं परमार्थतो न तदमृतं, विषं हालाहलं 'खु' निश्चितं, न तेनाजरामरो भवेत्, तत्क्षणादेव 'निधनं व्रजेत्' मरणं प्राप्नुयादित्यर्थः ॥ ४६ ॥ ४७ ॥ किञ्च—

अगीअत्थकुसीलेहिं, संगं तिविहेण वोसिरे । मुक्खमग्गस्सिमे विग्घे, पहंमी तेणगे जहा ॥ ४८ ॥

अगी० ॥ अगीतार्थाश्च कुशीलाश्च तैरगीतार्थकुशीलैः, उपलक्षणत्वात्सभेदपार्श्वस्थावसन्नसंसक्तयथाच्छन्दैः सह, 'सङ्गं' संसर्गं 'त्रिविधेन' मनोवाक्कायेन, तत्र मनसा चिन्तनम्—अहं मिलनं करोमीति, वाचा आलापसंलापादिकरणमिति, कायेन सम्मुखगमनप्रणामादिकरणमिति, 'व्युत्सृजेत्' विविधं विशेषेण वा उ इति—भृशं सृजेत्—त्यजेदित्यर्थः, तथा चोक्तं श्रीमहानिशीथषष्ठाध्ययने—"वासलक्खंपि सूलीए, संभिन्नो अच्छियामुहो । अगीयत्थेण समं एक्कं, खणद्धंपि न संवसे ॥ १ ॥" तथा 'मोक्षमार्गस्य' निर्वाणपथ 'इमे' पूर्वोक्ताः 'विग्घे'त्ति विघ्नकरा इत्यर्थः, 'पथि' लोकमार्गे 'स्तेनकाः' चौराः यथेत्युदाहरणोपदर्शन इति ॥ ४८ ॥ किञ्च—

पज्जलियं हुयवहं दुट्ठं, निस्संको तत्थ पविसिउं । अत्ताणं निद्दहिज्जाहि, नो कुसीलस्स अल्लिए ॥ ४९ ॥

॥ १४ ॥

पज्ज० ॥ प्रज्वलितं 'हुतवहं' वैश्वानरं 'दुट्ठ'मिति 'दुष्टं' निर्दयं यद्वा 'दट्ठु'मिति 'दृष्ट्वा' विलोक्य 'निःशङ्कः' त्यक्तशङ्कः 'तत्र' हुतवहे 'प्रविश्य' प्रवेशं विधाय 'आत्मानं' स्वयं 'निर्दहेत्' भस्मसात्कुर्यादित्यर्थः, परं 'नो' नैव कुशीलस्य 'अलि-

गीतार्थमहिमा अ-
गीतार्थमहिमा गा. ४६-७

गीअ० परम० गाथाद्वयम् ॥ 'गीतार्थस्य' अधीतगुरुपार्श्वसूत्रार्थस्य 'वचनेन' उपदेशेन 'विषं' गरलं, किंभूतं ?-
'हालाहलं' उत्कटं 'पिबेत्' गलरन्ध्रे पातयेत्, विनेय इति शेषः, किंभूतः ?-'निर्विकल्पः' सर्वथा गतशङ्कः, भक्षयेच्च विष-
गुटिकादिकं यद्विषगुटिकादिकं 'तत्क्षणे' भक्षणप्रस्तावे समुपद्रवेत्, पञ्चत्वं प्रापयेदित्यर्थः ॥ ४४ ॥ 'परमार्थतः' तत्त्वतः
तद्विषं न भवति, 'अमृतरसायनं' अमृतरसतुल्यं 'खु' निश्चितं तद्विषं 'निर्विघ्नं' विघ्नविवर्जितं 'यद्' यस्मात् कारणात् न
तद्विषं मारयति-न प्राणत्यागं करोति, अतः कथमपि "मृतोऽपि' मरणं प्राप्तोऽपि 'अमृतसम एव' जीवन्निव भवतीत्यर्थः,
शाश्वतसुखहेतुत्वादिति, गीतार्थस्येत्यत्र चतुर्भङ्गी यथा-संविग्ना नाम एके नो गीतार्थाः १ न संविग्ना नाम एके गीतार्थाः २
संविग्ना नाम एके गीतार्था अपि ३ न संविग्ना नाम एके नो गीतार्थाः ४, तत्र न प्रथमभङ्गस्था धर्माचार्याः आगमपरि-
ज्ञानाभावात् १ द्वितीयभङ्गस्था अपि न धर्माचार्याश्चारित्ररहितत्वात्, यदि शुद्धप्ररूपका भवन्ति साधून् वन्दन्ते साधूंश्च
न वन्दापयन्ति तदा संविग्नपाक्षिका जायन्त इति २ तृतीयभङ्गस्था धर्माचार्या एव, समग्रचारित्रज्ञानयुक्तत्वात्, नन्वेवं-
विधास्तु गणधरादय एव भवन्ति न संप्रतिकाले तथाविधा अप्रमादिनः, कथं धर्माचार्यत्वं तेषां ?, उच्यते—वर्त्तमानकाले
यत्सूत्रं वर्त्तते तस्य गुरुपरम्परया गृहीतार्थाः विनिश्चितार्थाः गीतार्था भवन्ति, दुःषमासेवार्त्तसंहननाद्यनुभावतो वीर्यम-
गोपयन्तः संविग्ना एव अतो न तेषां धर्माचार्यत्वं व्यभिचरतीति ३, चतुर्थभङ्गस्था अपि न धर्माचार्याः, ज्ञानक्रियाशून्य-
त्वात् केवललिङ्गमात्रोपजीवित्वाच्चेति ४ ॥ ४५ ॥ अथोक्तविपरीतमाह—

अगीअत्थस्स वयणेणं, अमियंपि न घुंटए। जेण नो तं भवे अमयं, जं अगीअत्थदेसियं ॥ ४६ ॥

विवर्जितः' तत्र मायालोभात्मको रागः क्रोधमानात्मको द्वेष इति ॥ ४१ ॥ निष्ठापितानि–क्षयं नीतानि अष्टौ मदस्थानानि–जाति १ कुल २ रूप ३ बल ४ लाभ ५ श्रुत ६ तपो ७ विभव ८ लक्षणानि येनासौ निष्ठापिताष्टमदस्थानः, शोषिताः–दुर्बलीकृताः कषायाः–सभेदाः क्रोधमानमायालोभा येनासौ शोषितकषायः, जितानि–आत्मवशीकृतानि इन्द्रियाणि–श्रोत्र १ दृग् २ नासा ३ जिह्वा ४ स्पर्शन ५ मनो ६ लक्षणानि येनासौ जितेन्द्रियः 'विहरेत्' विहारं कुर्यादित्यर्थः तेन छद्मस्थेनापि सार्द्धं 'केवली' केवलज्ञानी ॥ ४२ ॥ अथोक्तविपरीतैः सार्द्धं विहारो न विधेय इत्याह—

जे अणहीयपरमत्था, गोअमा ! संजया भवे । तम्हा ते विवज्जिज्जा, दुग्गईपंथदायगे ॥ ४३ ॥

जे अ० ॥ 'ये' मुनयः अनधीता–अनभ्यस्ताः परमार्थाः–ये आश्रवाः–कर्मबन्धस्थानानि ते परिश्रवाः–कर्मनिर्जरास्थानानि १, ये एव परिश्रवा–निर्जरास्थानानि तान्येवाश्रवाः–कर्मबन्धस्थानानि २, येऽनाश्रवास्तेऽप्यपरिश्रवाः–कर्मबन्धस्थानानि कौङ्कणसाध्वादिवत् ३, अपरिश्रवाः–कर्मबन्धस्थानानि तेऽनाश्रवा–न कर्मबन्धस्थानानि कणवीरलताभ्रामक–क्षुल्लकस्येव ४, इत्याद्यागमपरिज्ञानरूपा यैस्तेऽनधीतपरमार्थाः हे गौतम ! संयता भवन्ति तस्मात्तानपि 'विवर्जयेत्' दूरतस्त्यजेत्, किंभूतान् ?–'दुर्गतिपथदायकान्' तिर्यग्नरककुमानुषकुदेवमार्गप्रापकानित्यर्थः ॥ ४३ ॥ अथ गीतार्थोपदेशः सर्वोऽपि सुखावहो भवतीत्याह—

गीअत्थस्स वयणेणं, विसं हालाहलं पिवे। निव्विकप्पो य भक्खिज्जा, तक्खणे जं समुद्दवे ॥ ४४ ॥
परमत्थओ विसं नो तं, अमयरसायणं खु तं । निव्विग्घं जं न तं मारे, मओऽवि अमयस्समो ॥ ४५ ॥

आज्ञाविराधना मुनिवृन्दलक्षणम् गा. ३९–४२

जो ऊ पमायदोसेणं, आलस्सेणं तहेव य । सीसवग्गं न चोएइ, तेण आणा विराहिया ॥ ३९ ॥

जो उ० ॥ 'यो' गणी तुशब्दादुपाध्यायगणावच्छेदादिः प्रमादश्च–निद्रादिः द्वेषश्च–मत्सरः दोषश्च वा–स्वशिष्ये रागादिकः प्रमादद्वेषं प्रमाददोषं वा तेन, यद्वा प्रमादरूप एव यो दोषः–कुलक्षणत्वं तेन प्रमाददोषेण, आलस्येन तथैव च, चकारान्मोहावज्ञादिप्रकारेण, 'शिष्यवर्गं' अन्तेवासिवृन्दं न प्रेरयति संयमानुष्ठान इति शेषः 'तेन' आचार्येण 'आज्ञा' जिनमर्यादा 'विराधिता' खण्डितेत्यर्थः ॥ ३९ ॥

संखेवेणं मए सोम !, वन्नियं गुरुलक्खणं । गच्छस्स लक्खणं धीर !, संखेवेणं निसामय ॥ ४० ॥

संखे० ॥ 'सङ्क्षेपेण' विस्तराभावेन मया 'हे सौम्य !' हे विनेय ! 'वर्णितं' प्ररूपितमित्यर्थः गृणाति–वदति तत्त्वमिति गुरुस्तस्य लक्षणं–चिह्नम् । अथेति शेषः 'गच्छस्य' मुनिवृन्दस्य लक्षणं धिया राजत इति धीरस्तस्य सम्बोधनं क्रियते हे धीर ! सङ्क्षेपेण 'निशामय' आकर्णयेति ॥ ४० ॥

गीअत्थे जे सुसंविग्गे, अणालस्सी दढव्वए । अक्खलियचरित्ते सययं, रागदोसविवज्जिए ॥ ४१ ॥
निट्ठवियअट्ठमयट्ठाणे, सोसिअकसाए जिइंदिए । विहरिज्जा तेण सद्धिं तु, छउमत्थेणवि केवली ॥ ४२ ॥

गीअ० ॥ निट्ठ० ॥ गीतं–सूत्रमर्थस्तस्य व्याख्यानं तद्द्वयेन युक्तो गीतार्थः यः 'सुसंविग्गे'त्ति अत्यर्थं संवेगवान् न विद्यते आलस्यं वैयावृत्त्यादौ यस्यासौ 'अनालस्यः' आलस्यरहित इत्यर्थः दृढानि–सुनिश्चलानि व्रतानि–महाव्रतलक्षणानि यस्यासौ दृढव्रतः, अस्खलितम्–अतीचाररहितं चारित्रं सप्तदशभेदं यस्यासौ अस्खलितचारित्रः 'सततं' अनवरतं 'रागद्वेष-

'वोलिही'ति गमिष्यति 'कालः' समयादिलक्षणः, ते संविग्नपाक्षिकाः पूज्या विज्ञेया इति ॥ ३६ ॥ ये एवंविधा न स्युस्तेषां स्वरूपमाह—

**तीआणागयकाले केइ होहिंति गोयमा ! सूरी । जेसिं नामग्गहणेऽवि होइ नियमेण पच्छित्तं ॥ ३७ ॥**

तीआ० ॥ अतीते कालेऽनागतकाले च 'केचित्' अनिर्दिष्टनामानोऽभूवन्निति शेषः 'होहिंति' भविष्यन्ति वर्त्तमानेऽपि काले सन्ति हे गौतम ! 'सूरयः' आचार्यपदनामधारकाः, येषां परिचयकरणादिकं दूरे आस्तां 'नामग्रहणेऽपि' अमुकदेवदत्ताख्यसूरिरित्यपि कथ्यमाने भवति निश्चयेन प्रायश्चित्तमिति, तथा चोक्तं श्रीमहानिशीथपञ्चमाध्ययने—"इत्थं चायरियाणं पणपण्णं होंति कोडिलक्खाओ । कोडिसहस्से कोडीसए य तह एत्तिए चेव ५५५५५५०००००००० ॥ १ ॥ एतेसिं मज्झाओ एगे न बुड्डेइ गुणगणाईण ॥" इति ॥ ३७ ॥

**जओ–सइरीभवंति अणविक्खयाइ जह भिच्चवाहणा लोए । पडिपुच्छाहिं चोयण तम्हा उ गुरू सया भयइ ॥३८॥**

जओ–स० ॥ जओत्ति भिन्नपदं यतो भणितं–'सइरी'त्ति स्वेच्छाचारिणो भवन्ति 'अणविक्खयाइ'त्ति शिक्षारहितत्वेन यथा भृत्यवाहनादयः, तत्र भृत्याः–सेवकाः वाहनानि–हस्त्यश्ववृषभमहिषादीनि लोके, तथा विनेयाः गुरूणां कार्यं २ प्रति पृच्छाः प्रतिपृच्छास्ताभिः प्रतिपृच्छाभिः 'चोयणे'ति प्राकृतत्वाद्विभक्तिपरिणामः चोदनादिभिश्च विनेति गम्यं स्वेच्छाचारिणो भवन्तीत्यर्थः, यस्मात्स्वेच्छाचारिणो भवन्ति तस्मात्प्रतिपृच्छादिभिराचार्यो विनेयानां तुशब्दान्महत्तरा स्वशिष्यणीनां 'सदा' सर्वकालं 'भयइ'त्ति धातूनामनेकार्थत्वात् 'सत्यापयति' शिक्षां ददातीत्यर्थः ॥ ३८ ॥ किञ्च—

समिई ५ भावण १२ पडिमा य १२ इंदियनिरोहो ५ । पडिलेहण २५ गुत्तीओ अभिग्गहा ४ चेव करणं तु ॥ २ ॥" इति ॥ ३४ ॥ अथ संविग्नपाक्षिकस्य साधुविषये किञ्चित्कृत्यं दर्शयन् इत्याह—

**संमग्गमग्गसंपट्ठिआण साहूण कुणइ वच्छल्लं । ओसहभेसज्जेहि य सयमन्नेणं तु कारेइ ॥ ३५ ॥**

संमग्ग० ॥ 'सन्मार्गमार्गसंप्रस्थितानां' प्रधानमार्गपरम्पराप्रवृत्तानां 'साधूनां' जगदुत्तममुनीनां 'करोति' निर्जरार्थं विधत्ते 'वात्सल्यं' अन्तरङ्गभावेनोपकारकरणं, कैः ?–'औषधभेषजैः' तत्रौषधम्–अनेकद्रव्यसंयोजितं तद्व्यतिरिक्तं भेषजं, यद्वा औषधं–हरीतक्यादि भेषजं–पेयादि, चशब्दोऽनेकप्रकारभावसूचकः, 'स्वयं' आत्मना 'अन्येन' आत्मव्यतिरिक्तेन कारयति तुशब्दात्कुर्वन्तमन्यमनुजानाति यः स संविग्नपाक्षिक आराधको ज्ञेय इत्याशयः ॥ ३५ ॥ किञ्च—

**भूया अत्थि भविस्संति केइ तेलुक्कनमिअकमजुअला । जेसिं परहिअकरणिक्कबद्धलक्खाण वोलिही कालो ॥ ३६ ॥**

भूया० ॥ 'भूताः' अतीतकाले 'अत्थि'त्ति 'सन्ति' विद्यन्ते वर्त्तमानकाले 'भविष्यन्ति' भविष्यत्काले 'केचित्' अल्पाः संविग्नपाक्षिकाः, किंभूताः ?–त्रैलोक्येन–स्वर्गमर्त्यपाताललक्षणेन तन्निवासिप्राणिगणेनेत्यर्थः नतं क्रमयुगलं–चरणयुग्मं येषां ते त्रैलोक्यनतक्रमयुगलाः, 'येषां' सत्पुरुषाणां संविग्नपाक्षिकाणां, पुनः किंभूतानां ?–'परहितकरणैकबद्धलक्षाणां' परस्मै–अन्यस्मै हितं परहितं परहितस्य करणं परहितकरणं तस्मिन् एकम्–अद्वितीयं बद्धं लक्षं–आलोचनलक्षणं यैस्ते पर०, लक्षणं आलोचनं इति, यद्वा परहितकरणे एकं बद्धं लक्षं–दर्शनं लक्षणं वा यैस्ते परहि० 'लक्षीण् दर्शनांकनयो'रिति तेषां प०

संविग्नपाक्षिककृत्यं तत्पूज्यता गा. ३५-६

शुद्धप्ररूपणा तत्फलं च गा ३३-४

बोहेउं ॥ २ ॥" इत्यादि । तथा 'इतरः पुनः' उत्सूत्रभाषकः साधुद्वेषी च गृहस्थधर्मात् 'चुक्क'त्ति भ्रष्टो यः स साधुर्न भवति उत्सूत्रप्ररूपकत्वात् साधुपरिद्वेषपरिणामत्वाच्च गृहस्थोऽपि न भवति गृहाश्रमधर्माभावात् गृहस्थवेषाभावाच्चेति ॥ ३२ ॥ यद्येवं ततः किं कर्त्तव्यम् ? इत्याह—

जइवि न सक्कं काउं सम्मं जिणभासिअं अणुट्ठाणं । तो सम्मं भासिज्जा जह भणियं खीणरागेहिं ॥ ३३ ॥

जइ० ॥ यद्यपि शक्यं न भवति तेन 'सक्कइ'त्ति पाठे तु न शक्यते 'कर्त्तुं' विधातुं, कथं ?—'सम्यक्' त्रिकरणशुद्ध्या 'जिनभाषितं' केवल्युक्तं 'अनुष्ठानं' आजन्म क्रियाकलापरूपं, ततः 'सम्यक्' आत्मसामर्थ्येण भाषेत यादृशं स्यात्तादृशं यथा 'क्षीणरागैः' जिनैः 'भणितं' कथितं तथा निरूपयेदिति ॥ ३३ ॥ अथ प्रमादिनामपि शुद्धप्ररूपणया को गुणः ? इत्याह—

उस्सन्नोऽवि विहारे कम्मं सोहेइ सुलभबोही य । चरणकरणं विसुद्धं उववूहिंतो परूविंतो ॥ ३४ ॥

उस्स० ॥ 'अवसन्नोऽपि' शिथिलोऽपि, क ?—'विहारे' मुनिचर्यायां 'कर्म' दुष्टज्ञानावरणादिकं शोधयति, कर्मणां शिथिलत्वं प्रापयतीत्यर्थः, सुलभा—सुखेन लभ्येत्यर्थः बोधिः—जन्मान्तरे जिनधर्मप्राप्तिरूपा यस्यासौ सुलभबोधिः, चकारात्सुदेवत्वप्राप्तिस्तदनन्तरं च सुकुलोत्पत्तिर्भवति, किं कुर्वन् ?—चरणकरणं 'विशुद्धं' निर्दोषं 'उपबृंहयन्' निर्मायभावेन प्रशंसां कुर्वन् 'प्ररूपयन्' च वाञ्छाविरहितो यथास्थितं भव्यानां कथयन्निति । तत्र "वय ५ समणधम्म १० संजम १७ वेयावच्चं च १० बंभगुत्तीओ ९ । णाणाइतियं ३ तव १२ कोहनिग्गहाइ ४ य चरणमेयं ॥ १ ॥" तथा—"पिंडविसोही ४

॥ ११ ॥

उन्मार्गगफलं संविग्नपाक्षिकस्व. गा. ३१-२

कुत्सिततारको नरो भवति स ब्रहून् पृष्ठलग्नान् जन्तुसमूहान् नद्यादौ बोलयति आत्मानमपि च बोलयतीति ॥ ३० ॥ अथोन्मार्गपरम्परालग्नानामाचार्याणां मुनीनां च किं फलं भवति? इत्याह—

उम्मग्गमग्गसंपट्ठिआण साहूण गोअमा! नूनं। संसारो अ अणंतो होइ य सम्मग्गनासीणं ॥ ३१ ॥

उम्म० ॥ उन्मार्गा—गोशालकबोटिकनिह्नवादयस्ते तेषां मार्गः—परम्परा तस्मिन् यद्वा उन्मार्गरूपो यो मार्गस्तस्मिन् स्थितानां 'साधूनां' मुनिवेषाभासकानां उपलक्षणत्वात्तदाचार्याणामपि हे 'गौतम!' हे इन्द्रभूते! 'नूनं' निश्चितं 'संसारः' चतुर्गत्यात्मकः न विद्यतेऽन्तः—पर्यन्तो यस्यासावनन्तो भवति, चकारस्तद्गतानेकदुःखसूचकः, किंभूतानां?—'सन्मार्गनाशिनां' जिनोक्तपथाच्छादकानां, महानिशीथोक्तमुनिचन्द्रसाधुवत् ॥ ३१ ॥ अथ कोऽपि कदाचित्प्रमादपरत्वेन न जिनोक्तक्रियां करोति परन्तु भव्यानां यथोक्तं जिनमार्गं दर्शयति स कस्मिन् मार्गे आत्मानं स्थापयति?, तद्विपरीतश्च कीदृशो भवति?, इत्याह—

सुद्धं सुसाहुमग्गं कहमाणो ठवइ तइअपक्खंमि। अप्पाणं इयरो पुण गिहत्थधम्माओ चुक्कत्ति ॥ ३२ ॥

सुद्धं० ॥ 'शुद्धं' आज्ञाशुद्धिसंयुक्तं 'सुसाधुमार्गं' सुविहितपथं 'कथयन्' आकाङ्क्षाऽभावेन प्ररूपयन् 'स्थापयति' रक्षयति 'आत्मानं' स्वयं, क?—साधुश्रावकपक्षद्वयापेक्षया 'तृतीयपक्षे' संविग्नपाक्षिके, संविग्नानां—मोक्षाभिलाषिसुसाधूनां पाक्षिकः-साहाय्यकर्त्ता संविग्नपाक्षिकस्तस्मिन्, तस्येदं लक्षणं—"सुद्धं सुसाहुधम्मं कहेइ निंदइ य नियमायारं। सुतवस्सियाण पुरओ होइ य सव्वोमराइणिओ ॥ १ ॥ वंदइ न य वंदावइ किइकम्मं कुणइ कारवे ,नेव। अत्तट्ठा नवि दिक्खइ देइ सुसाहूण

दर्शयतीत्यर्थः, 'आज्ञां' पारगतोक्तमर्यादां 'अतिक्रमन्' उल्लङ्घयन् पुनः सः 'कापुरुषः' पुरुषाधमः, 'न सत्पुरुषः' न प्रधानपुरुषो, जमालिवदिति ॥ २७ ॥ अथ कीदृशा आचार्या आज्ञातिक्रामका भवन्ति ?, आह—

आज्ञातिक्रामकस्य स्वरूपं तत्सेवाफलं गा. २९-३०

भट्ठायारो सूरी १ भट्ठायाराणुविक्खओ सूरी २ । उम्मग्गठिओ सूरी ३ तिन्निवि मग्गं पणासंति ॥ २८ ॥

भट्ठा० ॥ भ्रष्टः—सर्वथा शिथिलीभूतः आचारो—ज्ञानाचारादिर्यस्य स भ्रष्टाचारः 'सूरिः' अधमाचार्यः १ भ्रष्टाचाराणां—मुक्तसंयमव्यापाराणां मुनीनामुपेक्षकः, प्रमादप्रवृत्तसाधुसाध्वीवृन्दान् न निवारयतीत्यर्थः, 'सूरिः' मन्दधर्माचार्यः २ 'उन्मार्गस्थितः' उत्सूत्रादिप्ररूपणे प्रवृत्तः 'सूरिः' अधमाधमो नामाचार्यः ३ एते त्रयोऽपि 'मार्गं' ज्ञानादिरूपं पन्थानं 'प्रणाशयन्ति' भृशं विनाशयन्तीत्यर्थः ॥ २८ ॥ एतान् यः सेवते तस्य फलं दर्शयन्नाह—

उम्मग्गठिए सम्मग्गनासए जो उ सेवए सूरिं । निअमेणं सो गोयम ! अप्पं पाडेइ संसारे ॥ २९ ॥

उम्म० ॥ 'उन्मार्गस्थितान्' आगमविरुद्धप्ररूपकान् 'सन्मार्गनाशकान्' जिनोक्तमार्गदूषकान् 'यः' भव्यसत्त्वः सेवते, तदुक्तमनुष्ठानं कुरुत इत्यर्थः, तुशब्दात्तदुक्तमनुष्ठानं कारयति अनुमोदयति च, 'सूरि' मिति 'सूरीन्' आचार्यान् प्राकृतत्वादेकवचनं, 'नियमेन' निश्चयेन स हे गौतम ! आत्मानं स्वयं पातयति 'संसारे' भवान्धकूपे क्षिपतीत्यर्थः ॥ २९ ॥ किञ्च—

उम्मग्गठिओ एक्कोऽवि नासए भव्वसत्तसंघाए । तं मग्गमणुसरंतं जह कुत्तारो नरो होइ ॥ ३० ॥

उम्म० ॥ 'एकोऽपि' अद्वितीयोऽपि सूरिः साधुर्वा 'उन्मार्गस्थितः' कुमतिकदाग्रहग्रस्तो नाशयति, संसारसागरे पातयतीत्यर्थः 'भव्यसत्त्वसङ्घातं' भवसिद्धिकजन्तुसमूहं तन्मार्गं 'अनुसरन्तं' आश्रयन्तं, यथेति दृष्टान्तोपदर्शने 'कुतारः' २७

**तित्थयरसमो सूरी सम्मं जो जिणमयं पयासेइ । आणं अइक्कमंतो सो काउरिसो न सप्पुरिसो ॥ २७ ॥**

विहि० ॥ 'विधिना' आगमोक्तन्यायेन यः आचार्यः तुशब्दादुपाध्यायादिकः 'चोएइ'त्ति नोदयति-प्रेरयति नोदन-स्मारणवारणप्रतिनोदनादिभिः शिष्याणामिति, 'सूत्रं' आचाराङ्गादिकं उत्सर्गा १ पवादो २ त्सर्गापवादिका ३ पवादौत्सर्गिको ४ त्सर्गोत्सर्गिका ५ पवादापवादिकात्मकं ६, तथा सूत्रपाठनानन्तरं तस्यैव निर्युक्तिभाष्यचूर्णिसंग्रहणीवृत्त्यादिरूपं परम्परात्मकमर्थं 'ग्राहयति' शिक्षयति चकारात् नैगमसङ्ग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूतान् सप्त नयान् ज्ञापयति स आचार्यः 'धन्यः' सूत्रधनदायकत्वात् स च 'पुण्यः' अर्थदानपुण्यकृत्त्वात् चकाराज्जिनाज्ञाप्रतिपालकः स बन्धुरिव बन्धुः कुमत्यादिनिवारणेन सन्मार्गे स्थापकत्वात् मुक्ख० ज्ञानेन जीवादिपदार्थपरिज्ञानं तेन संयमे दृढत्वं दृढत्वेन कर्माभावस्ततो मोक्षदायक इति ॥ २५ ॥ स ए० ॥ 'स एव' अनन्तरोक्त एव 'भव्यसत्त्वानां' मोक्षगमनयोग्यजन्तूनां 'चक्षुर्भूतः' नेत्रतुल्यः 'व्याहृतः' कथितः जिनादिभिः 'दर्शयति' कुमतिपटलनिराकरणेन प्रकटयति 'यः' आचार्यशिरोमणिः 'जिनोद्दिष्टं' जिनोक्तं 'अनुष्ठानं' मोक्षपथप्रापकं रत्नत्रयं 'यथास्थितं' यादृशं स्यात्तादृशम् ॥ २६ ॥ तित्थ० ॥ तीर्थं-चतुर्विधः सङ्घः प्रथमगणधरो वा तत्कुर्वन्तीति तीर्थकरास्तेभ्यः समः-तुल्यः, देशसमत्वमिदं विज्ञेयं, अन्यथा क्व तीर्थकरत्वं क्वाचार्यत्वमिति, कः ?-सूरिः-अनेकातिशयसंयुक्तो गौतमादिसदृश आचार्यः 'सम्यग्' इति सर्वशक्त्या यो 'जिनमतं' जगत्प्रभुदर्शनं नित्यानित्यादिस्वरूपवाचकं सप्तनयात्मकं कुमततरुगजायमानं 'प्रकाशयति' भव्यान्

प्रतिलेखनापूर्वकं धारयतोऽजीवसंयमः १०, प्रेक्ष्य चक्षुषा शयनासनादीनि कुर्वीतेति प्रेक्षासंयमः ११, पार्श्वस्थादीनामुपेक्षणमुपेक्षासंयमः १२, सचित्ताचित्तमिश्ररजोऽवगुण्डितपादादीनां प्रमार्जनं प्रमार्जनासंयमः १३, अनुपकारकं वस्तु विधिना परिष्ठापयतः परिष्ठापनासंयमः १४, द्रोहेर्ष्यादिभ्यो निवृत्तिर्धर्मध्यानादिषु प्रवृत्तिर्मनःसंयमः १५, एवं वाक्काययोरपि १६।१७, तस्य योगः–प्रतिलेखनादिव्यापारस्तेन निस्सारश्चर्विततताम्बूलवदिति, यद्वा 'संजम०' निर्गतं सारं–स्वर्गापवर्गफलं यस्य स निस्सारः, केन ?–संयमश्च योगश्च–योगोद्वहनं संयमयोगं तेन, तद्धि संयमयोगोद्वहनहेतुत्वादिति ॥२३॥ कु० ॥ कुलं–गृहं ग्रामं–सकरं नकरं–गो १ महिषी २ उष्ट्र ३ च्छाग ४ च्छगली ५ तृण ६ पलाल ७ वूरक ८ काष्ठा ९-ङ्गार १० क्षेत्र ११ गृह १२ दूरदेशव्यवसायि १३ वलीवर्द १४ घृत १५ चर्म १६ भोजन १७ सेइमाणाक १८ रूपाष्टादशकररहितं राज्यं–सप्ताङ्गमयं, अथवा राज्यमिति सर्वत्र योज्यं, यथा कुलराज्यं ग्रामराज्यं नगरराज्यं, यद्वा कुलग्रामनगराणि यत्रैवंविधं राज्यं 'पयहिय'त्ति त्यक्त्वा पुनरिति शेषः 'यः' साध्वाभासः 'तेषु' कुलादिषु 'करोति' विधत्ते 'हुः' निश्चितं 'ममत्वं' समैतदिति मन्यते 'सः' पूर्वोक्तः केवलं 'लिङ्गधारी' वेषमात्रधारी संयमः–पञ्चाश्रवविरमण ५ पञ्चेन्द्रियनिग्रह १० कषायचतुष्टयजय १४ दण्डत्रयविरति १७ लक्षणस्तस्य योगो–व्यापारस्तेन निस्सारो–गतसार इति ॥ २४ ॥

पुनर्गाथात्रयेणोत्तमाचार्यस्वरूपमाह—

विहिणा जो उ चोएइ, सुत्तं अत्थं च गाहई । सो धण्णो सो अ पुण्णो य, स बंधू मुक्खदायगो ॥ २५ ॥

स एव भव्वसत्ताणं, चक्खुभूए वियाहिए । दंसेइ जो जिणुद्दिट्ठं, अणुट्ठाणं जहट्ठियं ॥ २६ ॥

अधमाचार्यस्वरूपं गा. २३-४

सीया० ॥ 'सीयावेइ'त्ति शिथिलत्वं प्रापयति मुनीनामिति शेषः, कं प्रति ?-विहारं प्रति, अथवा 'सीयावेइ'त्ति स्वय-
मलसो भवति, क्व ?-विहारे, अत्र "सप्तम्या द्वितीये"ति प्राकृतसूत्रेण सप्तम्यर्थे द्वितीयेति, अत्र विहारस्वरूपं बृह-
त्कल्पादिभ्यो यथा-साधूनां ग्रामनगरराजधान्यादिषु वृत्तिप्राकारपरिक्षेपयुक्तेषु बहिर्गृहपद्धतिरहितेषु एकं मासं यावद्वस्तुं
कल्पते कारणं विना हेमन्तग्रीष्मयोः, कारणे तु पाटकपरावर्त्तनं क्रियते, तदभावे गृहपरावर्त्तनं, तदभावे वसतावेव ५
स्थानपरावर्त्तनं, न त्वेकस्थानवसनमिति, ग्रामादिषु वृत्तिप्राकारपरिक्षेपयुक्तेषु बहिर्गृहपद्धतियुक्तेषु मासद्वयं यावद्वस्तुं
कल्पते हेमन्तग्रीष्मयोः, मासमेकमन्तः बहिरेकं च, यत्रैव वसति तत्रैव भिक्षाचर्या भवति, एवं साध्वीनामपि, नवरं यत्र
साधूनां मासकल्पस्तत्र साध्वीनां मासद्वयं यावद्वस्तुं कल्पते । तथा सुखशीलस्य-साताभिलाषिणो गुणाः-पार्श्वस्थादि-
स्थानानि सुखशीलगुणास्तैर्यः 'अबुद्धीओ'त्ति तत्त्वज्ञानरहितः, यद्वा 'सुहसीलगुणेहिं'ति, इत्यत्र सप्तम्यर्थे तृतीया,
सुखं च-उपशमसन्तोषलक्षणं शीलं च-मूलगुणलक्षणं गुणाश्च-उत्तरगुणरूपास्तेषु यः, न विद्यते बुद्धिः-अन्तःकरणभावरूपा १०
यस्यासौ अबुद्धिः अबुद्धिरेवाबुद्धिकः भावशून्य इत्यर्थः, यद्वा सुखे-मोक्षलक्षणे शीलं-स्वभावो येषां ते सुखशीलाः-
जिनास्तेषां गुणाः-केवलज्ञानकेवलदर्शनादिरूपास्तेषु यः 'अबुद्धीओ'त्ति अत्र नञ् कुत्सार्थे कुत्सिता-विरुद्धप्ररूपणरूपा
बुद्धिः-मतिर्यस्यासौ अबुद्धिकः, 'स' पूर्वोक्तः 'नवरं' केवलं लिङ्गं-साधुनेपथ्यरूपं धरतीत्येवंशीलो लिङ्गधारी,
द्रव्यलिङ्गधारीत्यर्थः, तथा संयमः-पृथिव्यादिः सप्तदशलक्षणः, यथा पृथिवी १ भू २ वह्नि ३ वायु ४ तरु ५ द्वि ६ त्रि ७- १४
चतुः ८ पञ्चेन्द्रियाणां ९ मनोवाक्कायैः करणकारणानुमतिभिः संरम्भसमारम्भारम्भवर्जनमिति जीवसंयमः, पुस्तकादीन्

नो पर्यागलच्छ्रोताः पद्महृदवत्, पद्महृदे तु जलं निर्गच्छति न त्वागच्छति २ तथा परो नो परिगलत्श्रोताः पर्यागलत्श्रोताश्च, लवणोदधिवत्, लवणे आगच्छति जलं न तु निर्गच्छति ३ अपरस्तु नो परिगलत्श्रोता नो पर्यागलत्श्रोताश्च, मनुष्यलोकाद्बहिः समुद्रवत्, तत्र नागच्छति न च निर्गच्छति ४ । तत्राचार्यः श्रुतमङ्गीकृत्य प्रथमभङ्गपतितः, श्रुतस्य दानग्रहणसद्भावात् १ साम्परायिककर्मापेक्षया तु द्वितीयभङ्गपतितः, कषायोदयाभावेन ग्रहणाभावः कायोत्सर्गादिना क्षपणापत्तेश्च, साम्परायिककर्म्म तु कषायकर्म्म २ आलोचनामङ्गीकृत्य तृतीयभङ्गपतितः, आलोचनायाः अप्रतिश्राविस्वात् ३ कुमार्गं प्रति चतुर्थभङ्गपतितः, कुमार्गस्य हि प्रवेशनिर्गमाभावात् ४ । यद्वा केवलं श्रुतमाश्रित्य धर्मभेदेन भङ्गा योज्यन्ते, तत्र स्थविरकल्पिकाचार्याः प्रथमभङ्गपतिताः १ द्वितीयभङ्गपतितास्तु तीर्थकृत् २ तृतीयभङ्गकास्त्वाहालन्दिकाः, तेषां च क्वचिदर्थापरिसमाप्तावाचार्यादेर्निर्णयसद्भावात् ३ प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभङ्गस्थाः ४, कथं ?, सम्यक्—सर्वप्रकारेण, तथा समा—अविपरीता पासीति—दृष्टिर्दर्शनमवलोकनं यस्यासौ समदृष्टिर्भवति, क ?—'सर्वकार्येषु' आगमव्याख्यानादिसकलव्यापारेष्वित्यर्थः 'सः' पूर्वोक्त आचार्यः 'रक्षति' धत्ते कुमार्गे पतितमिति शेषः, कं ?—'गच्छं' गणं, किंभूतं ?—सबालाश्च ते वृद्धाश्च सबालवृद्धास्तैराकुलः—सङ्कीर्णस्तं सबालवृद्धाकुलं, किमिव ?, चक्षुरिव, यथा चक्षुर्गर्त्तादौ पतन्तं जन्तुगणं धत्ते तथाऽयमिति ॥ २२ ॥ अथाधमाचार्यस्वरूपं गाथाद्वयेनाह—

सीयावेइ विहारं सुहसीलगुणेहिं जो अबुद्धीओ । सो नवरि लिंगधारी संजमजोएण णिस्सारो ॥ २३ ॥
कुलगामनगररज्जं पयहिय जो तेसु कुणइ हु ममत्तं । सो नवरि लिंगधारी संजमजोएण निस्सारो ॥२४॥

बादरचिकित्साकरणं क्रोधमानपिण्डौ संबन्धिसंस्तवकरणं विद्यायोगचूर्णपिण्डाः प्रकाशकरणं द्विविधं द्रव्यक्रीतं आत्मभावक्रीतं लौकिकप्रामित्यपरावर्त्तिते निष्प्रत्यपायपरग्रामाभ्याहृतं पिहितोद्भिन्नं कपाटोद्भिन्नं उत्कृष्टमालापहृतं सर्वमाच्छेद्यं सर्वमनिसृष्टं पुरःकर्म्म पश्चात्कर्म गर्हितम्रक्षितं संसक्तम्रक्षितं प्रत्येकाव्यवहितनिक्षिप्तपिहितसंहृतमिश्रापरिणतच्छर्दितानि प्रमाणोल्लङ्घनं सधूमं अकारणभोजनं चेति लघवो दोषाः, चतुर्थादाचाम्लमिव २ एतेभ्योऽप्यध्यवपूरकान्त्यभेदद्वयं कृतं भेदचतुष्टयं भक्तपानपूतिकं मायापिण्डः अनन्तकायव्यवहितनिक्षिप्तपिहितादीनि मिश्रानन्ताव्यवहितनिक्षिप्तानि चेति लघवः, आचाम्लादेकभक्तमिव ३ एतेभ्योऽप्योघौद्देशिकमुद्दिष्टभेदचतुष्टयमुपकरणपूतिकं चिरस्थापितं प्रकटकरणं लोकोत्तरं परावर्त्तितं प्रामित्यं च परभावक्रीतं स्वग्रामाभ्याहृतं दर्दरोद्भिन्नं जघन्यमालापहृतं प्रथमाध्यवपूरकः सूक्ष्मचिकित्सा गुणसंस्तवकरणं मिश्रकर्दमेन लवणसेटिकादिना च म्रक्षितं पिष्टादिम्रक्षितं किञ्चिद्दायकदुष्टं प्रत्येकपरम्परस्थापितादीनि मिश्रानन्तरस्थापितादीनि चेति लघवः, एकभक्तात्पुरिमार्द्धमिव ४ एतेभ्योऽपि त्वित्वरस्थापितं सूक्ष्मप्राभृतिका सस्निग्धसरजस्कम्रक्षितं प्रत्येकमिश्रं परम्परस्थापितादीनि चेति लघवः, पुरिमार्द्धान्निर्विकृतिकमिवेति ५ । विशेषस्तु छेदग्रन्थादवसेय इति ॥ २१ ॥

अपरिस्सावी सम्मं समपासी चेव होइ कज्जेसुं । सो रक्खइ चक्खुं पिव सबालवुड्ढाउलं गच्छं ॥ २२ ॥

अप० ॥ न परिश्रवति–न परिगलतीति अपरिश्रावी, आचाराङ्गोक्ततृतीयभङ्ग(ह्रद)तुल्य इत्यर्थः, तद्यथा–एको ह्रदः परिगलच्छ्रोताः पर्यागलच्छ्रोताश्च, शीताशीतोदाप्रवाहह्रदवत्, यतस्तत्र जलं निर्गच्छत्यागच्छति च १ अपरस्तु परिगलच्छ्रोताः

चारित्रि लक्षणम् गा० २१

पिंडं० ॥ 'पिण्डं' चतुर्विधाहारलक्षणं 'उपधिं' औघिकौपग्रहिकलक्षणं, तत्रौघिकस्त्रिधा–मुखवस्त्रिका १ पात्रकेशरिका २
गुच्छकः ३ पात्रप्रस्थापनं ४ चेति चतुर्विधो जघन्यः, पटलानि १ रजस्त्राणं २ पात्रबन्धः ३ चोलपट्टः ४ मात्रकं ५ रजो-
हरणं ६ चेति षड्विधो मध्यमः, पतद्ग्रहः १ कल्पत्रयं ४ चेति चतुर्विध उत्कृष्टः, औपग्रहिकोपधिरपि दण्डासनक १-
दण्डक २ पुस्तका ३ दिभेदेन त्रिधा स्यात्, विशेषतो जीतकल्पटीकादिभ्यो ज्ञेयमुपधिस्वरूपमिति, 'शय्यां' आचाराङ्गोक्तव-
सतिलक्षणां, एतत्रयमुद्गमोत्पादनैषणादोषशुद्धं, तत्रोद्गमः–पिण्डस्योत्पत्तिः तद्विषया आधाकर्मिकादयः षोडश दोषा उद्गम-
दोषाः, एते च प्रायेण गृहिभ्यः समुत्पद्यन्ते, प्रायेणेत्युक्ते स्वद्रव्यक्रीतस्वभावक्रीतलोकोत्तरप्रामित्यलोकोत्तरपरिवर्त्तितरूप- २७
दोषाः साधुनाऽपि क्रियमाणा अवसेया इति १६, उत्पादना–मूलतः शुद्धस्यापि पिण्डस्य धात्रीत्वादिभिरुपार्जनं तद्वि-
षयाः षोडश दोषाः, साधुसमुत्थाः ते उत्पादनादोषाः, साधुनैव तेषां विधीयमानत्वात् १६, एषणा–शङ्कितादिभिरन्वेषणं
तद्विषया गृहिसाधुजन्या दश दोषाः एषणादोषाः, शङ्कितदोषस्य साधुभावापरिणतदोषस्य च साधुजन्यत्वात् शेषाणां च
गृहिप्रभवत्वादिति, 'चारित्ररक्षार्थं' संयमपरिपालनार्थं 'शोधयन्' विशुद्धपिण्डग्रहणार्थमवलोकयन् तदप्राप्तौ गुरुलघुदोषा-
नन्वेषयंश्च भवति स 'चारित्री' चारित्रवानित्यर्थः, गुरुलघुदोषस्वरूपं यथा तत्र सर्वगुरु मूलकर्म, तत्र मूलं १८०, एतस्मा- २५
च्चाधाकर्मकं कर्मौद्देशिकचरमत्रिकं मिश्रान्त्यद्विकं बादरप्राभृतिका सप्रत्यपायाभ्याहृतं लोभपिण्डः अनन्तकायाव्यवहित- ॥ ७ ॥
निक्षिप्तपिहितसंहृतमिश्रापरिणतच्छर्दितानि संयोजना साङ्गारं वर्त्तमानभविष्यन्निमित्तं चेति लघवो दोषाः, मूलप्रायश्चित्ता-
च्चतुर्थतपोवत् १ तेभ्यः कर्मौद्देशिकाद्यभेदः मिश्रप्रथमभेदः धात्रीत्वं दूतीत्वं अतीतनिमित्तं आजीवनापिण्डः वनीपकत्वं २८

गुरुबोधनं गणिस्वरूपम् गा. १९-२०

सीसो० ॥ 'शिष्योऽपि' स्वहस्तदीक्षितोऽपि 'वैरी' शत्रुः स यो 'गुरुं' धर्मोपदेशकं 'न बोधयति' हितोपदेशं न ददाति,
तुशब्दाद्धितोपदेशं दत्त्वा सन्मार्गे न स्थापयति, किंभूतं ?—प्रमादो—निद्राविकथादिरूपः स एव मदिरा—वारुणी प्रमाद-
मदिरा तया ग्रस्तम्—आच्छादितं तत्त्वज्ञानमित्यर्थः सामाचारीविराधकं, षष्ठाङ्गोक्तशेलकाचार्यवत् येन चातुर्मासिकमपि न
ज्ञातमिति ॥ १८ ॥ अथ कथं प्रमादिनं गुरुं बोधयति ? इत्याह—

तुम्हारिसावि मुणिवर ! पमायवसगा हवंति जइ पुरिसा । तेणऽन्नो को अम्हं आलंबण हुज्ज संसारे ? ॥ १९ ॥

तुम्हा० ॥ युष्मादृशा अपि हे 'मुनिवर !' श्रमणश्रेष्ठ 'प्रमादवशगाः' प्रमादपरवशा भवन्ति 'यदि' चेत् 'पुरुषाः' पुमांसः
तेन कारणेन 'अन्यः' पूज्यव्यतिरिक्तः कः 'अस्माकं' मन्दभाग्यानामकृतपुण्यानां प्रमादपरवशानां भवच्चरणारविन्दचञ्च-
रीकाणां त्यक्तपुत्रगृहगृहिणीनां आलम्बनं सागरे नौरिव भविष्यति भयङ्करे पीडाकरे शोकभरे दुःखाकरे अपारसंसारे चतु-
र्गत्यात्मके पततामिति ॥ १९ ॥

नाणंमि दंसणंमि य चरणंमि य तिसुवि समयसारेसु । चोएइ जो ठवेउं गणमप्पाणं च सो अ गणी ॥ २० ॥

नाणं० ॥ 'ज्ञाने' अष्टविधज्ञानाचारे 'दर्शने' अष्टविधदर्शनाचारे च 'चरणे' अष्टविधचारित्राचारे च त्रिष्वपि समय-
सारेषु, चशब्दात्तपआचारे वीर्याचारे च, 'चोएइ'त्ति प्रेरयति यो 'गणी' सूरिः, किं कर्त्तुं ?—स्थापयितुं, कं ?—'गणं' कुलसमु-
दायरूपं 'आत्मानं च' स्वयं च, चशब्दात् श्रोतृवर्गं च, स च 'गणी' आचार्यः कथितो गणधरादिभिः ॥ २० ॥

पिंडं उवहिं सिज्जं उग्गमउप्पायणेसणासुद्धं । चारित्तरक्खणट्ठा सोहिंतो होइ स चरित्ती ॥ २१ ॥

सत्स्वगच्छोक्तां वा 'न ग्राहयेत्' निर्जरापेक्षी सन्न शिक्षयतीत्यर्थः, तुशब्दात्सुविनीतप्रतीच्छकगणमपि न सूत्रार्थं ददाति सोऽयोग्य इति ॥ १५ ॥

बाला० ॥ 'बालानां' प्रश्नव्याकरणोक्तानां यो–गणी 'शिष्याणां' अन्तेवासिनां, तुशब्दान्महत्तरा स्वशिष्यणीनां, 'जिह्वया' रसनया उपलिम्पेत् गौरिव वत्सं, भावार्थोऽयम्–अत्यन्तबाह्यहितकोमलामन्त्रणचुम्बनादिप्रकारान् करोतीत्यर्थः, 'सम्यग्मार्गं' मोक्षपथं 'न ग्राहयति' न दर्शयति न शिक्षयतीत्यर्थः, उपलक्षणाच्छिक्षयन्तमन्यं निवारयति स आचार्यो–गणाधीशो 'वैरी' रिपुरिति त्वं जानीहि, अथवाऽऽर्षत्वाद्विभक्तिपरिणामः, तमाचार्यं वैरिणं जानीहि त्वमिति ॥ १६ ॥ अथा- १५
सद्गुरुसद्गुर्वोः किञ्चित्स्वरूपं दर्शयति— २०

जीहाए विलिहंतो न भद्दओ सारणा जहिं णत्थि। दंडेणवि ताडंतो स भद्दओ सारणा जत्थ ॥ १७ ॥

जीहाए० ॥ 'जिह्वया विलिहन्' बाह्यहितं कुर्वन्नाचार्यो 'न भद्रो' न कल्याणकृत् यत्र गणिनि– गुरौ 'सारणा' हिते प्रवर्त्तनलक्षणा कृत्यस्मारणलक्षणा वा, उपलक्षणत्वाद्वारणा–अहितान्निवारणलक्षणा चोयणा–संयमयोगेषु स्खलितः सन्नयुक्तमेतद्भवादृशां विधातुमित्यादिवचनेन प्रेरणा, प्रतिचोदना–तथैव पुनः पुनः प्रेरणा 'नास्ति' न विद्यते, तथा २५
दण्डेनापि–यष्ट्यापि, अपिशब्दाद्वरकादिना 'ताडयन्' शरीरे पीडां कुर्वन् स आचार्यो 'भद्रः' कल्याणकृत् यतो यत्र ॥ ६ ॥
सारणादि विद्यत इति ॥ १७ ॥ अथ विनेयनिर्गुणत्वमाह— २७

सीसोवि वेरिओ सो उ, जो गुरुं नवि बोहए। पमायमइराघत्थं, सामायारीविराहयं ॥ १८ ॥

देसं० ॥ 'देशं' मालवकादिकं 'क्षेत्रं' रूक्षारूक्षभाविताभावितादिरूपं तुशब्दाद् गुरुग्लानबालवृद्धप्राघूर्णादियोग्यं द्रव्यं दुर्भिक्षादिकालं च ज्ञात्वा 'वस्त्रं' आचाराङ्गाद्युक्तविधिना चीवरं 'पात्रं' पतद्ग्रहादिकं 'उपाश्रयं' स्त्रीपशुपण्डकवर्जितमुनियोग्यालयं संगृह्णीत, तथा चोक्तं स्थानाङ्गसप्तमस्थानके–आचार्योऽनुत्पन्नान्युपकरणानि सम्यगुत्पादयिता भवति, पूर्वोत्पन्नान्युपकरणानि सम्यक् संरक्षयिता उपायेन चौरादिभ्यः संगोपयिता अल्पसागरिककरणेन मलिनतारक्षणेन चेति, तथा साधूनां वर्गो–वृन्दं साधुवर्गस्तं, चशब्दात्साध्वीवर्गं च नतु हीनाचारवर्गं, तथा सूत्रं–गणधरादिबद्धं तस्यार्थो–निर्युक्तिभाष्यचूर्णिसङ्ग्रहणिवृत्तिटिप्पनादिरूपः सूत्रं चार्थश्च सूत्रार्थं 'निभालयति' जिनोपदेशेन चिन्तयतीत्यर्थः, चशब्दात्सुविनीतविनेयवर्गं जिनगणधराज्ञया पाठयति, अविनीतविनेयं प्रति नार्पयति प्रायश्चित्तापत्तेः, एवंविध आचार्यो मोक्षमार्गवाहकः कथितः ॥ १४ ॥ अथ मोक्षमार्गभञ्जकः कथ्यते—

संगहोवग्गहं विहिणा, न करेइ अ जो गणी । समणं समणिं तु दिक्खित्ता, सामायारिं न गाहए ॥ १५ ॥
बालाणं जो उ सीसाणं, जीहाए उवलिंपए । न सम्ममग्गं गाहेइ, सो सूरी जाण वेरिओ ॥ १६ ॥

संग० ॥ सङ्ग्रहं–ज्ञानादीनां सच्छिष्याणां वा संग्रहणं, उपग्रहं च–तेषामेव भक्तश्रुतादिदानेनोपष्टम्भनं 'विधिना' उत्सर्गापवादप्रकारेण न करोति स्वयं प्रमादमदिराग्रस्तत्वेन चशब्दान्न कारयति कुर्वन्तमन्यं द्वेषयति यः कश्चित् 'गणी' आचार्याभासः, तथा श्रमणं च श्रमणीं 'दीक्षित्वा' व्रतारोपं विधाय 'सामाचारीं' 'जयं चरे जयं चिट्ठे' इत्यादिरूपां

तदभावे तस्यैव प्रेषितस्य गूढार्थामतिचारशुद्धिं कथयतीति ३, इह केनचिद्गीतार्थसंविग्नेन गुरुणा कस्यापि शिष्यस्य क्वचिदपराधे या शुद्धिः प्रदत्ता तां तथैवावधार्य सोऽपि शिष्यस्तथैवापराधे प्रयुङ्क्ते तदाऽसौ धारणाव्यवहारः, उद्धृतपदधरणरूपा वा, कश्चित्साधुर्गच्छोपकारी अप्यशेषच्छेदग्रन्थयोग्यो न भवति गुरुस्तस्योद्धृतपदानि ददाति, तेषां पदानां धरणं धारणाव्यवहारः ४, द्रव्यादि विचिन्त्य संहननादीनां हानिं ज्ञात्वा चोचितेन केनचित्तपःप्रकारेण यां गीतार्थाः शुद्धिं दिशन्ति तत्समयभाषया जीतमुच्यते, यद्वा यत्प्रायश्चित्तं यस्याचार्यस्य गच्छे सूत्रातिरिक्तं कारणतः प्रवर्त्तितं अन्यैश्च बहुभिरनुवर्त्तितं तत्तत्र रूढं जीतमुच्यते, तदेवमेतेषां पञ्चानां व्यवहाराणामन्यतरेणापि व्यवहारेण युक्त एव प्रायश्चित्तप्रदाने गीतार्थो गुरुरधिक्रियते न चागीतार्थोऽनेकदोषसम्भवादिति, अपिशब्दादनेकभव्यानां विधिना दत्तालोचनस्तेनापीति ॥ १२ ॥ अथालोचनायां दृष्टान्तमाह—

जह सुकुसलोऽवि विज्जो अण्णस्स कहेइ अत्तणो वाहिं। विज्जुवएसं सुचा पच्छा सो कम्ममायरइ ॥ १३ ॥

जह सु० ॥ यथा सुष्ठु कुशलोऽपि—भिषक्शास्त्रे निपुणोऽपि, अपिशब्दाद्वयःप्राप्तोऽपि, 'वैद्यः' चिकित्साकर्त्ता 'आत्मनः' स्वस्य 'व्याधिं' रोगोत्पत्तिं 'अन्यस्य' परवैद्यस्य 'कथयति' यथास्थितं निरूपयति, 'वैद्योपदेशं' वैद्यनिरूपितं 'श्रुत्वा' आकर्ण्य 'पश्चात्' परवैद्यकथनानन्तरं सः—वैद्यस्तद्वैद्योक्तं 'कर्म्म' प्रतीकाररूपं 'आचरति' करोतीत्यर्थः, एवमालोचनास्वरूपज्ञाता आलोचकोऽपि सद्गुरूक्तं तपो यथाऽर्पितं करोतीति ॥ १३ ॥ अथाचार्यकृत्यं किञ्चिदाह—

देसं खित्तं तु जाणित्ता, वत्थं पत्तं उवस्सयं। संगहे साहुवग्गं च, सुत्तत्थं च निहालई १४ ॥

२७ क्वचिदधिकृतमर्थमुपसंहरति २८, नयप्रस्तावे नयानवतारयति २९, ग्राहणाकुशलः प्रतिपादनशक्तियुक्तः ३०, स्वसमयं परसमयं वेत्ति, परेणाक्षिप्त उभयं निर्वाहयति ३१ । ३२ । गम्भीरः—अतुच्छस्वभावः ३३, दीप्तिमान् परवादिनामक्षोभ्यः ३४, शिवो—मारिरोगाद्युपद्रवविघातकृत् ३५, सौम्यः शान्तदृष्टितया प्रीत्युत्पादकः ३६, तैः समन्वागतेन—संयुक्तेन तेनापि, अन्य आस्ताम्, अवश्यं—निश्चयेन कर्त्तव्या, का ?—परेषामाचार्याणां साक्षिकी परसाक्षिकी विशेषेण—निर्मायत्वेन शुद्धिः—दोषमलकर्षणं विशुद्धिरालोचनेत्यर्थः, पुनः किंविशिष्टेन तेन ?—सुष्ठ्वपि ज्ञानक्रियाव्यवहारकुशलेन—सुविहितेनेति, यद्वा सुष्ठ्वपि व्यवहारेषु पञ्चप्रकारेषु आगम १ श्रुता २ ज्ञा ३ धारणा ४ जीतलक्षणेषु ५ कुशलो—निपुणस्तेन, तत्राऽऽगम्यन्ते—परिच्छिद्यन्ते पदार्था अनेनेत्यागमः स च केवलिमनःपर्यायज्ञान्यवधिज्ञानिचतुर्दशपूर्विदशपूर्विनवपूर्विणां भवति, तत्र यदि केवली प्राप्यते तदा तस्यैवालोचना दीयते तदभावे परेषां १, निशीथकल्पव्यवहारदशाश्रुतस्कन्धप्रमुखं सर्वमपि श्रुतव्यवहारः २, देशान्तरस्थिते गुरौ शिष्यो गूढपदानि लिखित्वा प्रेषयति तदाऽसौ आज्ञारूपव्यवहारः, यद्वा देशान्तरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचना—जातातीचारनिवेदनमाज्ञाव्यवहारः, कोऽर्थः ?—यदा द्वावप्याचार्यावासेवितसूत्रार्थतयाऽतिगीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दूरदेशान्तरव्यवस्थितावत एव परस्परस्य समीपे गन्तुमसमर्थावभूतां तदाऽन्यतरः प्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थशिष्याभावे सति धारणाकुशलमगीतार्थमपि शिष्यं समयभाषया गूढार्थान्यतीचारासेवनपदानि कथयित्वा प्रेषयति, तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वयं तत्रागमनं करोति, शिष्यं वा तथाविधं योग्यं गीतार्थं प्रज्ञाप्य प्रेषयति,

मिनं जानीहीति ॥ ११ ॥ पूर्वं दोषवतामदत्तालोचनानां दोषवत्त्वमुक्तम्, अथ किं गुणवतामालोचनास्वरूपवेत्तॄणां सा गृहीता विलोक्यते न वा? इत्याह—

छत्तीसगुणसमण्णागएण तेणवि अवस्स कायव्वा । परसक्खिया विसोही सुट्ठुवि ववहारकुसलेण ॥ १२ ॥

छत्ती० ॥ देशकुलादयः षट्त्रिंशद्गुणा यथा—आर्यदेशोत्पन्नः सुखावबोधवाक्यः स्यात् १, पैतृकं कुलं, सुकुलोद्भवो यथो-
त्क्षिप्तभारोद्वहने न श्राम्यति २, मातृकी जातिस्तत्संपन्नो विनयान्वितः स्यात् ३, रूपवान् आदेयवाक्यः स्याद् आकृतौ गुणा
वसन्तीति ४, संहननयुतो व्याख्यानादिषु न श्राम्यति ५, धृतिः—चित्तावष्टम्भस्तद्युतो गहनेष्वप्यर्थेषु न भ्रमं याति ६, २०
अनाशंसी न श्रोतृभ्यो वस्त्राद्याकाङ्क्षते ७, अविकत्थनो न बहुभाषी स्यात् ८, अमायी—शाठ्यत्यक्तः ९, स्थिरपरिपाटिः,
तस्य हि सूत्रमर्थश्च न गलति १०, गृहीतवाक्योऽप्रतिघातवचनः स्यात् ११, जितपर्षत् परप्रवादिक्षोभ्यो न स्यात् १२,
जितनिद्रोऽल्पनिद्रः १३, मध्यस्थः सर्वशिष्येषु समचित्तः १४, देश १५ काल १६ भाव १७ ज्ञः सुखेन विहरति १७
आसन्नलब्धप्रतिभः परतीर्थिकादीनामुत्तरदाने समर्थः १८, नानाविधदेशभाषाज्ञो नानादेशजविनेयान् सुखेन शास्त्राणि
ग्राहयति १९, पञ्चविधाचारयुतः श्रद्धेयवचनः स्यात् २४, सूत्रार्थोभयज्ञः सम्यगुत्सर्गापवादप्ररूपकः स्यात् २५, आहरणं- २५
दृष्टान्तः २६, हेतुर्द्विधा—कारको ज्ञापकश्च, तत्र कारको यथा घटस्य कर्त्ता कुम्भकारः, ज्ञापको यथा तमसि घटादीनाम- ॥ ४ ॥
भिव्यञ्जकः प्रदीपः २७, उपनयः—उपसंहारो दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजनमिति भावः, क्वचित् कारणं—निमित्तं २८, २८
नया—नैगमादयस्तेषु निपुणः २९, स हि श्रोतारमपेक्ष्य तत्प्रतिपत्त्यनुरोधतः क्वचिद् दृष्टान्तोपन्यासं २६ क्वचिद्धेतूपन्यासं

च्छेदिनि ५, अथ स्वगच्छे पञ्चानामप्यभावे परगच्छे सांभोगिके आचार्यादिक्रमेणालोचयितव्यं, सांभोगिके गच्छे पञ्चानामप्यभावे संविग्नेऽसांभोगिके पञ्चाचार्यादिक्रमेणालोचयितव्यं, संविग्नासाम्भोगिकानामप्यभाव गीतार्थपार्श्वस्थसमीपे तदभावे सारूपिके संयतवेषगृहस्थे तदभावे गीतार्थपश्चात्कृते त्यक्तचारित्रवेषगृहस्थे तदभावे सम्यक्त्वभावितदेवतायां, यतो देवता महाविदेहादौ जिनानापृच्छ्य कथयत्यतः, तदभावे जिनप्रतिमापुरतः, तदभावे पूर्वाद्यभिमुखोऽर्हतः सिद्धानभि समीक्ष्य जानन् प्रायश्चित्तविधिं स्वयमेव प्रायश्चित्तं प्रतिपद्यते, एवं प्रतिपद्यमानः शुद्ध एवेति, तथा नित्यं–सदा सर्वत्र विरुद्धा कथा विकथा, तत्र स्त्रीकथा १ भक्तकथा २ देशकथा ३ राजकथा ४ मृदुकारुणिकाकथा ५ दर्शनभेदिनीकथा ६ चारित्रभेदिनीकथा ७ रूपा सप्तधा, आद्याश्चतस्रः कण्ठ्याः, श्रोतृहृदयमार्दवजननान्मृद्वी सा चासौ पुत्रादिप्रलापप्रधानत्वात्कारुण्यवती मृदुकारुणिका, यथा–"हा पुत्त ! २ हा वच्छ ! २ मुक्काऽसि कहमणाहाऽहं । एवं कलुणपलावा जलंतजलणेऽज्ज सा पडिया ॥ १ ॥" दर्शनभेदिनी ज्ञानाद्यतिशयतः कुतीर्थिकनिह्नवप्रशंसारूपा ६ यस्यां कथायां कथ्यमानायां कृतचारित्रमनसः प्रतिपन्नव्रतस्य वा चारित्रं प्रति भेदो भवति ७ अथवा विविधरूपा परपरिवादादिलक्षणा कथा विकथा तस्यां 'परायणं'ति भृशं तत्परमित्यर्थः, भुवनभानुकेवलिपूर्वभवरोहिणीश्राविकावत् । यद्वा कथा चतुर्धा यथा–आक्षिप्यते–मोहात्तत्त्वं प्रत्याकृष्यते श्रोता यया साऽऽक्षेपणी १, विक्षिप्यते–कुमार्गविमुखो विधीयते श्रोता यया सा विक्षेपणी २ संवेद्यते–मोक्षसुखाभिलाषी विधीयते यया सा संवेदनी ३, निर्वेद्यते–संसारनिर्विण्णो विधीयते यया सा निर्वेदिनी ४, तद्विपरीता विकथा तस्यां तत्परस्तं, हे सौम्य ! एवंविधं सूरिमुन्मार्गगा-

ढेति १, पदविभागसामाचारी जीतकल्पकनिशीथादिच्छेदग्रन्थोक्ता, साऽपि नवमपूर्वादेव २, चक्रवालसामाचारी तु अभ्यर्थनैव तावत्साधूनां न कल्पते, कारणे तु यद्यभ्यर्थयेत् परं तत्रेच्छाकारः कार्यः, यद्वा तस्य कुर्वतः किञ्चित् कश्चिन्निर्जरार्थी ब्रूते, यथा–तव कार्यमहं विधास्ये, तत्रापीच्छाकारो न बलात्कारः, दुर्विनीते बलात्कारोऽपि १, कल्पाकल्पे ज्ञाननिष्ठां प्राप्तस्य संयमतपोभ्यामाढ्यस्य गुरोर्निर्विकल्पं वाचनादौ यद्यूयं वदत तत्तथेति वाच्यं २, संयमयोगेऽन्यथाऽऽचरिते सति मिथ्याकारः ३, ज्ञानाद्यर्थमवश्यं गमने आवश्यिकी कार्या ४, वसतिचैत्यादौ प्रविशन्नैषेधिकीं कुर्यात् ५, कार्योत्पत्तौ गुरोरापृच्छनं ६, गुरुणा पूर्वनिषिद्धेनावश्यंकार्यत्वात्प्रतिपृच्छा, पूर्वनिरूपितेन वा करणकाले पुनः प्रतिपृच्छा ७, पूर्वगृहीतेनाशनादिना छन्दनम्–आह्वानं साधूनां कार्यम् ८, अटनार्थं गच्छता निमन्त्रणं ९, ज्ञानाद्यर्थमन्यगुरोराश्रयणमुपसंपत् १०–३ । अन्या वा निशीथोक्ता दशधा सामाचारी, यथा प्रातःप्रभृति क्रमशः प्रतिलेखना उपधेः १, ततः प्रमार्जना वसतेः २, भिक्षा कार्या ३, आगतैरीर्या प्रतिक्रम्या ४, आलोचनं कार्यं गृहानीतानां ५, असुरसुरंतिभोक्तव्यं ६, कल्पत्रयेण पात्रकाणां धावनं कार्यं ७, विचारः सञ्ज्ञोत्सर्गार्थं वहिर्यानं ८, स्थण्डिलानि 'वारस २ तिन्नि य'त्ति २७ कार्याणि ९ प्रतिक्रमणं कार्यं १० इत्यादि, विशेषतस्तु पञ्चवस्तुकद्वितीयद्वारे ज्ञेया, तस्या विराधको–भञ्जकस्तं सामाचारीविराधकं, नित्यं यावज्जीवमित्यर्थः, दत्ता–अर्पिता आलोचना–स्वपापप्रकाशनरूपा येन स दत्तालोचनो न दत्तालोचनः अदत्तालोचनस्तमदत्तालोचनं स्वपापाप्रकाशकमित्यर्थः, महानिशीथोक्तरूपीसाध्वीवत्, आलोचनाग्रहणं किञ्चिद् यथा–प्रथमं स्वकीयाचार्यपार्श्वे आलोचयितव्यं १ तदभावे स्वोपाध्याये २ तदभावे स्वप्रवर्त्तके ३ तदभावे स्वस्थविरे ४ तदभावे गणाव-

'छद्मस्थः' केवलज्ञानकेवलदर्शनशून्यः ?, इति परप्रश्ने सति गुरुराह–'हे मुने' हे भिक्षो ! 'तत्' उन्मार्गप्रस्थिताचार्यचिह्नं 'मे' मम कथयतस्त्वं 'निसामय'त्ति शृणु–आकर्णय ॥ ९ ॥

सच्छंदयारिं दुस्सीलं, आरंभेसु पवत्तयं । पीढयाइपडिबद्धं, आउक्कायविहिंसगं ॥ १० ॥
मूलुत्तरगुणब्भट्ठं, सामायारीविराहयं । अदिण्णालोयणं निच्चं, निच्चं विगहपरायणं ॥ ११ ॥

सच्छन्द० मूलु० ॥ स्वच्छन्देन–स्वाभिप्रायेण न तु जिनवचनेन चरति स्वपूजार्थं मुग्धकुमतिपातनार्थं च यः स स्वच्छन्दचारी तं स्वच्छन्दचारिणं दुष्टं–जिनगुर्वाज्ञाभञ्जकत्वेन शीलम्–आचारः पञ्चाचारलक्षणो यस्य स दुःशीलस्तं दुःशीलं, अथवा दुरिति कुत्सितः–परवञ्चनाऽनाचारसेवनादिलक्षणः शीलं–स्वभावो यस्य स दुःशीलस्तं दुःशीलं, 'आरंभेसु'त्ति बहुवचनात्संरम्भसमारम्भयोर्ग्रहणं, तत्रारम्भः–पृथिव्यादिजीवोपघातः १ संरम्भो–वधसङ्कल्पः २ समारम्भः–परितापः ३ तेषु प्रवर्त्तकं, वर्षाकालं विनेति शेषः, पीठम्–आसनमुपवेशनार्थं, आदिशब्दात्पट्टिकादयस्तेषु प्रतिबद्धं कारणं विना सेवनतत्परमित्यर्थः, आपो–जलमेव कायः–शरीरं यस्य सोऽप्कायः–अप्रासुकजलं तस्य विविधं–अनेकधा पदक्षालनपात्रक्षालनादिप्रकारेण हिंसकं–घातकं अप्कायविहिंसकम् ॥ १० ॥ मूलु० ॥ चारित्रकल्पवृक्षस्य मूलकल्पा गुणाः–प्राणातिपातविरमणादयो मूलगुणाः, मूलगुणापेक्षया उत्तरभूता गुणाः–पिण्डविशुद्ध्यादयो वृक्षस्य शाखा इवोत्तरगुणास्तेभ्यो भ्रष्टं–सर्वथा तत्राप्रवर्त्तकं, 'सामायारीविराहयं'ति त्रिधा सामाचारी–ओघनिर्युक्तिजल्पितं सर्वमोघसामाचारी, सा च नवमपूर्वात्तृतीयाद्वस्तुन आचाराभिधानात् तत्रापि विंशतितमात् प्राभृतात् तत्राप्योघप्राभृतान्निर्व्यू-

जन्म मर्यादीकृत्य 'आजन्म' यावज्जीवमित्यर्थः 'हे गौतम !' 'संयतः' षड्जीवपालनतत्परः 'मुनिः' गुर्वभिप्रायागमवेत्ता ॥७॥ अथ सद्गणः सदाचार्येणैव भवत्यतः सदाचार्यलक्षणमाह—

**मेढी आलंबणं खंभं, दिट्ठी जाणं सुउत्तिमं । सूरी जं होइ गच्छस्स, तम्हा तं तु परिक्खए ॥ ८ ॥**

मेढी० ॥ 'मेढी'त्ति मेढिः—पशुबन्धार्थं खलमध्ये स्थूणा, यथा तया बद्धानि बलीवर्दादिवृन्दानि मर्यादया प्रवर्त्तन्ते, 'आलम्बनं' यथा गर्त्तादौ पतज्जन्तोर्हस्ताद्याधार आलम्बनं तथा भवगर्त्तायां पततां भव्यानामाचार्य आलम्बनं, 'खंभं' यथा स्तम्भो गृहाधारो भवति तथाऽऽचार्यः साधुसंयमगृहाधारः मेघसंयमकामातुरस्वशिष्यं प्रति नन्दिषेणवत्, 'दिट्ठी'ति नेत्रं यथा नेत्रेण हेयोपादेयं विलोक्यते तथाऽऽचार्यरूपनेत्रेण हेयोपादेयं ज्ञायते प्रदेशिवत्, गृहं प्रति श्रीवीरवत्, 'यानं' यानपात्रं यथा अच्छिद्रं यानपात्रं सत्संयोगे तीरं प्रापयति तथाऽऽचार्योऽपि भवतीरं प्रापयति, जम्बूस्वामिनं प्रति श्रीसुधर्मस्वामिवत्, 'सुउत्तिम'मिति सुष्ठु—अत्यर्थं दृढा गुप्तिः—नवब्रह्मचर्यरूपा अस्यास्तीति सुगुप्तिमान्, यद्वा सुष्ठु—अतिशायिनी कुमतकर्कशप्रस्तरटङ्कणायमाना सद्धपद्मचन्द्रायमाना युक्तिरस्यास्तीति सुयुक्तिमान्, अथवा 'सुउत्तम'मिति पाठे तु सुष्ठु—अतिशयेनाचार्यगुणैरुत्तमः 'यत्' यस्मात् एवंविधः 'सूरिः' आचार्यो भवति 'गच्छस्य' गणस्य योग्यस्तस्मात् 'तं' आचार्यं 'परिक्खए'त्ति तस्य परीक्षां कुर्यादित्यर्थः ॥८॥ सन्मार्गस्थिताचार्यस्वरूपं किञ्चिद्दर्शितं, अथैतद्विपरीतस्वरूपं प्रश्नयन्नाह—

**भयवं ! केहिं लिंगेहिं, सूरिं उम्मग्गपट्ठियं । वियाणिज्जा छउमत्थे, मुणी ! तं मे निसामय ॥ ९ ॥**

भय० ॥ 'हे भगवन् !' हे पूज्य ! कैः 'लिङ्गैः' लक्षणैः सूरिं 'उन्मार्गप्रस्थितं' विरुद्धमार्गव्यवस्थितं विजानीयात्

तम्हा निउणं निहालेउं, गच्छं सम्मग्गपट्ठियं । वसिज्ज तत्थ आजम्मं, गोयमा ! संजए मुणी ॥ ७ ॥

'जामे'त्यादिगाथापञ्चकम् ॥ 'यामार्द्धं' प्रहरार्द्धं 'यामं' प्रहरं 'दिनं' अहोरात्रं 'पक्षं' मासार्द्धं 'मासं' पक्षद्वयं 'संवत्सरं' प्रतीतं, अपिशब्दाद् वर्षद्वयादिकं यावत्,वाशब्दो विकल्पार्थः, 'सन्मार्गप्रतिष्ठिते' जिनोक्तवचने यथाशक्ति स्थिते 'गच्छे' सत्साधुगणे 'संवसमानस्य' निवासं कुर्वाणस्य साधोर्वक्ष्यमाणलक्षणस्येतिशेषः हे गौतम ! ॥ ३ ॥ किंभूतस्य ?–लीलया–सुखत्वेन 'अलसमाणस्स'त्ति आलस्यं कुर्वाणस्य 'निरुत्साहस्य' निरुद्यमस्य 'वीमणं'ति षष्ठ्यर्थे द्वितीया 'विमनस्कस्य' शून्यचित्तस्य 'पिक्खविक्खाइ'त्ति पश्यतः साधूनां 'महानुभागानां' प्रौढप्रभावाणाम् ॥४॥ 'उद्यमं' अनालस्यं 'सर्वस्थामसु' सर्वक्रियासु, किंभूतमुद्यमं ?–'घोरवीरतवाइअं'ति घोरं–दारुणमल्पसत्त्वैर्दुरनुचरत्वात् 'वीर'न्ति वीरे–कर्मरिपुविदारणसमर्थं भवं वैरं, एवंविधं तप आदिर्यत्र तम्, आदिशब्दाद्दुष्करगुर्वादिवैयावृत्त्यं, 'लज्जां' व्रीडां 'शङ्कां' जिनोक्ते गुरुवचने च संशयरूपां 'अतिक्रम्य' सर्वथा परित्यज्य 'तस्य' सुखशीलादिदोषयुक्तस्यापि साधोः 'वीर्यं' जीवोत्साहरूपं समुच्छलेत्, अहमपि जिनोक्तक्रियां करोमि येन दुष्टदुःखसागरान्मुञ्चामीत्यर्थः, षष्ठाङ्गोक्तशेलकाचार्यवत् ॥५॥ वीर्योच्छलने फलमाह–वीर्येण तु जीवस्य समुच्छलितेन हे गौतम ! 'जन्मान्तरकृतानि' बहुभवोपार्जितानि 'पापानि' ज्ञानावरणादिदुष्कर्माणि 'प्राणी' आसन्नमोक्षकः 'मुहूर्त्तेन' अन्तर्मुहूर्तमात्रेण 'निर्दहेत्' भस्मसात्कुर्यादित्यर्थः, स्कन्धकाचार्यशिष्यदृढप्रहारिमरुदेव्यादिवदिति ॥ ६ ॥ यस्मादालस्यवतामपि सद्गणे एते गुणास्तस्मात् 'निपुणं' आत्ममोक्षकरं यथा स्यात्तथा 'निभाल्य' ज्ञानचक्षुषाऽवलोक्य 'गच्छं' गणं 'सन्मार्गप्रस्थितं' जिनोक्तमार्गव्यवस्थितं 'वसेत्' गुर्वाज्ञापूर्वकं निवासं कुर्यादित्यर्थः, 'तत्र' सद्गणे

ईशैर्नमस्यितं–नमस्कृतं 'महाभागं' विश्वविख्यातचतुस्त्रिंशन्महाऽतिशयविराजमानं अचिन्त्यशक्त्यन्वितं वा, गच्छस्व–भावमुनिवृन्दस्याचारो–ज्ञानाचारादिः गणमर्यादारूपो वा तं गच्छाचारं 'किञ्चित्' स्वल्पमुद्धरामो वयं, श्रुतमेव–द्वादशाङ्गीलक्षणमेव समुद्रः–सागरः श्रुतसागरस्तस्मात्–श्रुतसमुद्रात् ॥ १ ॥ अथ प्रथमं तावदुन्मार्गस्थिते गच्छे वसतां फलं दर्शयति—

**अत्थेगे गोयमा! पाणी, जे उम्मग्गपइट्ठिए। गच्छंमि संवसित्ताणं, भमई भवपरंपरं ॥ २ ॥**

अत्थे० ॥ अस्तीत्यव्ययं बहुवचनार्थे 'अस्ति' सन्ति विद्यन्त इत्यर्थः 'एके' केचित्–वैराग्यवन्तः 'प्राणिनो' जीवाः हे गौतम! 'ये' जीवाः अज्ञानत्वेन पण्डितंमन्यत्वेन च मार्गदूषणपूर्वकमुत्सूत्रप्ररूपणा यत्र स उन्मार्गः अथवा यत्र पञ्चाश्रवप्रवृत्तिः स उन्मार्गस्तस्मिन् प्रतिष्ठिते–प्रकर्षेण स्थिते एवंविधे 'गच्छे' साध्वाभासगणे 'संवसित्ताणं' ति उषित्वा 'भ्रमन्ति' परिभ्रमणं कुर्वन्तीत्यर्थः, कां?–भवस्य–चतुर्गतिलक्षणस्य परम्परा–परिपाटी तां भवपरम्पराम् ॥ २ ॥ अथ किञ्चित्प्रमादवतामपि सन्मार्गस्थिते गच्छे वसतां गाथापञ्चकेन फलं दर्शयति—

**जामद्ध-जाम-दिण-पक्खं, मासं संवच्छरंपि वा। सम्मग्गपट्ठिए गच्छे, संवसमाणस्स गोयमा! ॥ ३ ॥**
**लीला अलसमाणस्स, निरुच्छाहस्स वीमणं। पिक्खविक्खाइ अण्णेसिं, महाणुभागाण साहूणं ॥ ४ ॥**
**उज्जमं सव्वथामेसु, घोरवीरतवाइयं। लज्जं संकं अइक्कम्म, तस्स विरियं समुच्छले ॥ ५ ॥**
**वीरिएणं तु जीवस्स, समुच्छलिएण गोयमा!। जम्मंतरकए पावे, पाणी मुहुत्तेण निद्दहे ॥ ६ ॥**

॥ १ ॥

॥ अर्हं ॥

# गच्छायारपइण्णयं ।

श्रीपार्श्वजिनमानम्य, तीर्थाधीशं वरप्रदम् । गच्छाचारे गुरोर्ज्ञातां, वक्ष्ये व्याख्यां यथाऽऽगमम् ॥ १ ॥

मङ्गलाभिधेयादि गा. १

शास्त्रस्यादौ प्रयोजनाभिधेयसम्बन्धमङ्गलान्यभिधातव्यानि, तत्र प्रयोजनमनन्तरपरम्परभेदाद् द्विधा, पुनरेकैकं कर्तृश्रोतृभेदाद् द्विधा, तत्र गच्छाचारप्रकीर्णककर्त्तुरनन्तरप्रयोजनं शिष्यावबोधः, परम्परं त्वपवर्गप्राप्तिः, श्रोतुरप्यनन्तरं तदर्थावगमः, परम्परं तु मुक्तिपदप्राप्तिः १, अभिधेयं तु गच्छाचारः, तस्यैव भणिष्यमाणत्वात् २, सम्बन्धश्चोपायोपेयभावलक्षणः, तत्र वचनरूपापन्नमिदमेव गच्छाचारप्रकीर्णकमुपायः, उपेयं तु तदर्थपरिज्ञानम् ३, मङ्गलं द्विधा द्रव्यभावभेदात्, तत्र द्रव्यमङ्गलं पूर्णकलशादि, तद् अनैकान्तिकत्वात् मुक्त्वा भावमङ्गलं तु शास्त्रकर्त्तुरनन्तरोपकारित्वादभीष्टदैवतस्य वर्द्धमानस्वामिनो नमस्कारद्वारेणाह—

नमिऊण महावीरं तियसिंदनमंसियं महाभागं । गच्छायारं किंची उद्धरिमो सुयसमुद्दाओ ॥ १ ॥

नमिऊण महावीरं तियसिंदनमंसियं महाभागं । किंविशिष्टम् ?—त्रिदशाः—सुमनसस्तेषामिन्द्रैः—
'नत्वा' प्रणम्य, कं ?—महांश्चासौ वीरश्च महावीरस्तं महावीरं,

॥ अर्हम् ॥

श्रीमदानन्दविमलाचार्यान्तिषच्छ्रीमद्दानरर्षिविहितवृत्तियुतं

# श्रीमद् गच्छाचारप्रकीर्णकम् ।

प्रकाशयित्री प्राग्मुद्रितागमविक्रयागतद्रव्यसाहाय्येन आगमोदयसमितिः

शाह, वेणीचन्द्र सुरचन्द्रद्वारा-श्रीआगमोदयसमितिः

मोहमय्या निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३ तमे निलये रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम्.

प्रतयः १२५० ] वीरसंवत् २४५०. विक्रम संवत् १९८०. क्राइष्ट सन् १९२३. [ पण्यम् १-८-०

सकलागमरहस्यवेदि-आचार्य-श्रीमद्-विजयदानसूरीश्वरेभ्यो नमः ।





आचार्यवर्य-श्रीअजितप्रभसूरीश्वरविरचित-श्रीशान्तिनाथचरित्रान्तर्गतम्

# मङ्गलकलश-कथानकम् ।





प्रकाशिका-

श्रीविजयदानसूरीश्वर-जैनग्रन्थमाला ।